# मालिन्यरहितः सरोवरः

वीणायाः कक्ष्यायाः छात्रैः समीपस्थः सरोवरः गन्तव्यः आसीत् परिशीलनाय । कक्ष्याध्यापिका रोड्रिगस्वर्या तान् गणशः विभक्तवती । सरोवरस्य मालिन्यं वर्धमानम् अस्तीत्यतः एषा परिशीलनयोजना चिन्तिता आसीत् । छात्रैः परिशीलनं कृत्वा परिहारमार्गः अपि चिन्तनीयः आसीत् । उत्तमाय परिहारसूचकाय गणाय पारितोषिकं दीयते इति घोषितम् आसीत् ।

छात्राः मध्याह्नपर्यन्तं सरोवरपरिसरे अटितवन्तः । विद्यालयं प्रत्यागत्य घण्टां यावत् उपविश्य तैः स्वाभिप्रायः लिखितः । ते अभिप्रायाः सङ्गृहीताः । परिणामं निरीक्षमाणाः छात्राः गृहं गताः ।



अनन्तरदिने यदा कक्ष्याध्यापिका कक्ष्यां प्रविष्टवती तदा सर्वे छात्राः तस्याः कथनस्य श्रवणे नितरां कुतूहलिनः आसन् । सा अवदत् – ''सरोवरपरिसरे यत् प्रवर्तते तत् सम्यक् एव लक्षितं भवद्भिः । जनैः क्रियमाणं स्नानं, विविधानि हानिकारकाणि फेनकानि उपयुज्य वस्त्रक्षालनं, धेनुमहिषादीनाम् अवगाहनं पुरीषविसर्जनं च, सरोवरतटे बालैः क्रियमाणं मालिन्यम् इत्यादयः भवद्भिः अभिज्ञाताः । एतादृशस्य निवारणाय सूचनाफलकानि सरोवरं परितः स्थापनीयानि इति सूचना अपि युक्ता एव'' इति ।



क्षणं विरम्य सा पुनः अवदत् – ''सूचनाफलकस्थापनात्, बलात् नियमस्य आरोपणात् च ऋते अन्यत् किं कर्तुं शक्येत इति प्रायः न चिन्तितं भवद्भिः । वीणायाः गणेन एकेन एव अन्ये अपि उपायाः चिन्तिताः । ते च यथा – वस्त्रक्षालनाय पार्थक्येन स्थलकल्पनं, वृषभमहिषादीनां स्नापनाय गोष्ठस्य व्यवस्था, बालानां मेलनम् आयोज्य सरोवरमालिन्यनिवारणाय किं किं करणीयम् इति विवरणं, स्नानादिसमये हानिकारकस्य फेनकस्य उपयोगस्य निवारणाय दृष्टिदानम् इत्यादयः । एतादृश्यः विशिष्टाः सूचनाः दत्ताः यत् तदर्थं वीणायाः गणः पुरस्कारम् अर्हति'' इति ।

एतत् श्रुत्वा सर्वे छात्राः ऐककण्ठ्येन अघोषयन् – ''वीणायाः गणाय अभिनन्दनानि'' इति ।



चन्दमामा सम्पुटः - २२ जनवरी - २००६ सञ्चिका - १



## एतस्य अङ्कस्य विशेषाः






यथार्थं चित्रम् (वे.क.) ...१९

राजकुमारस्य साहाय्यं कृतम्.. ...२४







विवेकानन्दः क्रूर-जन्तवः च ...२९

रामायणम् - १ ...५१


## अन्तरङ्गम्


★ पुटोऽयम् वाचकानाम् ...६
★ अभिप्रायाविष्कारः कुत्र ? ...७
★ अलङ्कृतं शिरस्त्रम् ...९
★ भयङ्करः खातः - ४ ...१३
★ भारतीया सांस्कृतिकपरम्परा ...४३
★ वाचकानां कृते कथास्पर्धा ...४४
★ वाचकानां कृते कथास्पर्धा - परिणामः ...४५
★ वार्ताविशेषः ...४६
★ गर्वस्य फलम् ...४७
★ राजश्यालः ...५९
★ आर्यः - २९ ...६३
★ निमन्त्रयामो वयं कृतिकारान् ...६७
★ पुटोऽयं भवताम् ...६८
★ चित्रशीर्षिकास्पर्धा ...७०



**ग्राहकशुल्कम्** -

अमेरिका-केनडादेशयोः कृते

प्रतिकृतिमूल्यम् - $२

वार्षिकं शुल्कं - $२०

भवदीयं धनं Chandamama India Limited' नाम्ना प्रेषणीयम् -

**Subscription Division**

**CHANDAMAMA INDIA LIMITED**

No. 82, Defence Officers Colony,

Ekkatuthangal, **CHENNAI - 600 097**

E.mail : subscription@chandamama.org

**ग्राहकशुल्कविवरणम्**

वायुयानेन भारतेतरदेशान् प्रति

वार्षिकं (१२ सञ्चिकाः) - रू.९००/-

भारते रू. १४४/- (बुक्पोस्ट् द्वारा)

भवदीयं धनं D.D.द्वारा धनादेश(M.O.)द्वारा वा

'Chandamama India Limited' नाम्ना प्रेषणीयम् ।

विज्ञापिकादानार्थं सम्पर्क्यताम् -

**चेन्नै** - *शिवाजी*, Ph - 044-22313637/22347399

Fax: 044-22312447, Mobile: 98412-77347

email : advertisements @ chandamama.org

**देहली** - OBEROI MEDIA SERVICES, Telefax (011) 22424184

Mobile: 98100-72961, email: a.s.oberoi@indiatimes.com



*संस्थापकौ –*
**चक्रपाणिः, बि. नागिरेड्डिः च**

# महापुरुषाणां जीवनघटनाः

वयं नवस्य वर्षस्य प्रथमे मासे स्मः । द्वादशमासात्मकं पुनरेकं वर्षम् अतीतम् । बन्धुमित्रादीनां, सर्वेषां च सुखं कल्पयतु नवं वर्षम् इति इच्छा सहजा एव सर्वेषाम् । गते वर्षे ये उत्तमाः अंशाः दृष्टाः तेषाम् आत्मसात्करणाय यत्नः, ये अहितकराः अंशाः दृष्टाः तेषां परित्यागाय मतिः चापि एतादृशे प्रसङ्गे सहजा एव ।

महात्मानः बहवः लोके । तेषाम् अर्हता अनुभवाः च न हि समानाः । तेषां तान् अनुभवान् वयं प्रायः पठनात् अधिगन्तुं शक्नुमः । तथा अधिगताः अनुभवाः अस्मासु कमपि प्रभावविशेषं जनयन्ति एव । ते च प्रभावविशेषाः अस्माकं जीवनगतिम् अपि कदाचित् परिवर्तयितुम् अर्हन्ति ।

२००६ तमस्य वर्षस्यास्य प्रथमात् एतस्मात् मासात् वयं नूतनां कथामालिकां प्रकाशयितुं हर्षम् अनुभवामः । आ अष्टवर्षीयेभ्यः आ-अशीतिवर्षीयं मनसि निधाय एषा कथामालिका सज्जीकृता अस्ति ।

विवेकानन्दस्य जीवनघटनानां निरूपणात् एषा मालिका आरभ्यते । विवेकानन्दस्य जन्मदिनं जनवरीमासस्य १२ दिनाङ्के समग्रे देशे युवदिनत्वेन आचर्यते । सः नवभारतस्य स्फूर्तिमूलम् आसीत् । सामान्या अपि काचित् घटना जीवनं कथं परिवर्तयितुम् अर्हति इत्येतत् निरूपयन्ति एताः घटनाः । महापुरुषसम्बद्धाः एतादृश्यः जीवनघटनाः कुतूहल-कारिण्यः शिक्षणदायिन्यः च भवेयुः इति भावयामः वयम् ।

*सम्पादकः* – **विश्वम्**

Visit us at : http://www.chandamama.org



# वाचकानां पुटोऽयम्

*आ बहोः कालात् स्थितां वाचकानाम् इच्छां पूरयितुं वयम् एतं पुटम् आरभमाणाः स्मः, यत्र च भवन्तः पत्रिकायाः विषयवस्तुप्रस्तुत्यादिविषये स्वीयम् अभिप्रायम् आविष्कर्तुम् अर्हन्ति, गुणवत्तावर्धनाय सूचनाः दातुम् अर्हन्ति च । यद्यपि वयं वस्तुनिष्ठं विमर्शम् एव अभिलषामः, तथापि अर्हात् प्रशंसावचनात् विमुखाः तु न । भवताम् अभिप्रायः सङ्ग्रहरूपः भवतु, स्पष्टः भवतुः, स्फुटैः अक्षरैः लिखितः च भवतु । नाम, समग्रः सङ्केतः (पिन्कोड्सहितः) चापि अपेक्ष्यते एव ।*

*बेङ्गलूरुनगरीयया इन्फोसिस्संस्थायाः मुख्यया श्रीमती सुधानारायणमूर्तिवर्यया लिखितस्य पत्रस्य प्रकाशनेन वयम् एतस्य विभागस्य शुभारम्भं कुर्मः ।*

देवगन्धर्वयक्षराक्षसादीनां विलक्षणस्य लोकस्य ऊहने चन्दमामा माम् अभिप्रेरयति । भारतस्य समृद्धां सांस्कृतिकपरम्परां परिचाययन्ती एषा जानपदकथादिद्वारा देशस्य नानाभागान् परिचाययति अपि । यदा अहं बाला आसं तदा तु दूरदर्शनवीडियोप्रभृतयः न आसन् । पठनम् एकम् एव मनोरञ्जनसाधनं ज्ञानविकासस्य द्वारं च आसीत् । अतः वर्णमयैः चित्रैः रमणीयाभिः कथाभिः च युक्ता चन्दमामा प्रतिमासं मया सकुतूहलं प्रतीक्ष्यते स्म । न केवलं भारतीयाः कथाः, अपि तु अन्यदेशीयाः कथाः अपि अत्र प्रकाश्यन्ते ।

चन्दमामा उत्तमं पठनसाहित्यं यथा, तथैव श्रेष्ठानां मूल्यानां प्रतिबिम्बिका अपि । 'सुजयीन्द्रस्य सौभाग्यम्' 'सूचिकाकारणतः प्राप्ता सम्पत्तिः' इत्यादयः कथाः अत्र उदाहरणानि । ताश्च कथा निष्कपटतायाः फलं निरूपयन्ति । एतादृश्यः कथाः नैतिकमूल्यानां ज्ञापने, जीवने नैतिकतायाः अभिवर्धने च नितराम् उपकारिकाः भवन्ति इत्येतम् अंशं प्रायः मत्समवयस्काः सर्वे अङ्गीकुर्युः एव इति अहं भावयामि । सञ्चितं ज्ञानं तरुणजनसमूहं प्रति सङ्क्रामयितुम् एताः एव कथाः नितराम् उपकारिकाः अपि ।

अद्यापि अहं चन्दमामां तेन एव कुतूहलेन पठामि, यच्च कुतूहलं केभ्यश्चित् दशकेभ्यः पूर्वं, तन्नाम मम बाल्ये, मां चन्दमामापठने प्रवर्तयति स्म । चोरान् अधिकृत्य रचिताः अरेबियन्कथाः, वेतालकथाः, तिसृणां राजकुमारीणां कथाः, कांस्यदुर्गकथा इत्यादयः बह्व्यः कथाः मम स्मृतिपथे सन्ति अद्यापि । कथाः सर्वदा जनान् रञ्जयन्ति सम्मोहयन्ति च इति किं पुनः वक्तव्यम् ?



# अभिप्रायाविष्कारः कुत्र ?

सूरजः चन्द्रः च आत्मीयौ सुहृदौ । उभौ अपि धर्मपुर्यां ज्ञानानन्दस्य विद्यालये अध्ययनं कृतवन्तौ । सूरजः अध्यापकवृत्तिम् अवलम्बितवान् । चन्द्रः च नगरे स्थितस्य भूस्वामिनः कार्यालये उद्योगी जातः ।

यद्यपि तौ सुहृदौ, तथापि तयोः व्यवहारे अस्ति महान् भेदः । अन्येन सह चर्चयित्वा एव किमपि निर्णयति सूरजः । अन्यैः अनुमतं चेदेव सः तृप्तिम् अनुभवति ।

किन्तु चन्द्रः न तादृशः । सर्वेषु अपि विषयेषु सः गभीरतया चिन्तयति । तदनन्तरम् एव निर्णयं करोति । सः निर्णयः अनुचितः चेदपि तस्य विषये बद्धादरः भवति सः । अन्यैः सः न समालोचते सः, अन्येषां विमर्श-विषये अवधानम् अपि न ददाति ।

अन्येषु वचनेषु यदि विश्वासः क्रियेत तर्हि विषयः कष्टदायकः भवति, अनावश्यकतया शङ्काम् उत्पादयति च इति तस्य चिन्तनम् आसीत् ।

उभौ अपि सुहृदौ सप्ताहे एकवारं मिलतः एव । प्रतिशनिवासरं तौ कृष्णमन्दिरं गच्छतः । मन्दिरं प्रति गमनसमये सोपानमार्गे तौ गतस्य सप्ताहस्य घटनानां विषये चर्चां कुरुतः स्म ।

कदाचित् तौ देवदर्शनाय मन्दिरं प्रति गच्छन्तौ आस्ताम् । तदा मन्दिरदिक्तः आगच्छन् कश्चित् भक्तः तौ उद्दिश्य अवदत् - ''उपरि पर्वतशिखरे मन्दिरस्य द्वारं पिहितम् एव अस्ति । अर्चकः प्रायः तत्र नास्ति इति भाति'' इति ।

''एतावद्दूरं यत् आवाभ्याम् आगतं तत् व्यर्थं जातम्'' इति अवदत् सूरजः सविषादम् ।

''किमपि कार्यं व्यर्थं न । एतद्विषये एतावान् विषादः किमर्थम् ?'' इति अपृच्छत् चन्द्रः ।

''अन्यं कञ्चित् पृच्छाव तावत्'' इति वदन् अभिमुखम् आगच्छन्तं कञ्चित् सः अपृच्छत् - ''आर्य ! किं पर्वतस्य उपरि मन्दिरस्य द्वारम् उद्घाटितम् अस्ति ?'' इति ।

''अहं न जानामि'' इति वदन् वेगेन अग्रे गतवान् सः ।

''एतावद्दूरं तु आगतम् एव । मन्दिरसमीपं गत्वा स्वयं पश्याम । तेन न कापि हानिः'' इति अवदत् चन्द्रः ।

ततः तौ मन्दिरसमीपं गतौ । मन्दिरस्य द्वारं तु उद्घाटितम् एव आसीत् । अर्चकः अपि तत्र आसीत् एव । देवदर्शनं प्राप्य तौ प्रत्यागतौ ।

आगमनमार्गे चन्द्रः अवदत् – ''मन्दिरस्य द्वारं तु उद्घाटितम् एव आसीत् । विना विमर्शं कस्मिंश्चिदपि वचने विश्वासः न करणीयः । सन्देहनिवारणार्थं कः प्रष्टव्यः इत्यत्र अपि विवेचनम् आवश्यकम् । अन्यथा अस्माकम् अपमाननं स्यात्'' इति ।

अत्रान्तरे सोपानेषु उपविष्टः कश्चन भिक्षुकः उच्चैः अवदत् - ''भिक्षा दीयताम्'' इति ।

सूरजः भिक्षुकाय पादरूप्यकं दत्तवान् । एतत् दृष्ट्वा भिक्षुकः अपृच्छत् – ''श्रीमन् ! पूर्वं भवान् एकं रूप्यकं ददाति स्म । इदानीं तु पादरूप्यकमात्रं दीयते । एवं किमर्थम् ?'' इति ।

''पूर्वं तु अहम् अविवाहितः आसम् । मम व्ययः अपि अल्पः आसीत् । विवाहानन्तरं मम व्ययभारः प्रवृद्धः । अतः अर्धरूप्यक-दानम् आरब्धं मया । इदानीं तु अपत्यानि विद्याभ्यासरतानि सन्ति । अग्रिमेषु दिनेषु तेषां विवाहादिकं निर्वर्तनीयम् । तदा व्ययभारः इतोऽपि वर्धिष्यते । अतः मया व्ययाधिक्यं निवारणीयं खलु ? दानम् अकर्तुं तु न शक्यते । अतः पादरूप्यकं दत्तं मया'' इति अवदत् सूरजः ।

''यत् मया प्राप्तव्यम् आसीत् तत् धनं सञ्चित्य तेन पुत्राणां विवाहादिकं निर्वर्तयितुम् इच्छति भवान् । एवं ननु ?'' इति अवदत् भिक्षुकः ।

एतत् श्रुत्वा सूरजः दिग्भ्रान्तः ।

''योग्यस्य एव जनस्य पुरतः अभिप्रायः प्रकाशनीयः । अन्यथा एतादृशानि एव वचनानि श्रोतव्यानि भवन्ति'' इति हसन् उक्तवान् चन्द्रः ।

सूरजः चन्द्रस्य एतम् अभिप्रायम् अङ्गी-कृतवान् । तस्मात् तदीये व्यवहारे अपि परिष्कारः जातः ।





# अलङ्कृतं शिरस्त्रम्

वनमाली कश्चन वैद्यः । प्रतापः नाम युवकः तस्य सहायकः आसीत् । औषधसज्जीकरणं, मूलानां क्वथनेन कषायस्य निर्माणम् इत्यादिनि कार्याणि करोति स्म सः ।

तस्मिन् एव ग्रामे कश्चन वृद्धः मान्त्रिकः आसीत् । वनमाली यं रोगम् औषधेन उपशमयितुं न शक्नोति तं रोगं मान्त्रिकः मन्त्रशक्त्या उपशमयति स्म । तथापि वनमालिमान्त्रिकयोः प्रतिस्पर्धिभावः न आसीत् एव । तौ उभौ अपि ग्रामसेवायाम् आसक्तौ आस्ताम् ।

प्रतापस्य इच्छा यत् मान्त्रिकस्य सेवया मन्त्रतन्त्रादयः ज्ञातव्याः इति । कदाचित् सः मान्त्रिकं स्वस्य इच्छां निवेदितवान् । तदा मान्त्रिकः अवदत् – ''मम मन्त्रतन्त्रादयः वैद्यविद्यावलम्बिनः एव । अतः वैद्यविद्या आदौ भवता सम्यक् अध्येतव्या । तदनन्तरम् एव भवान् मन्त्रतन्त्रादिकं मत्तः अध्येतुम् अर्हति'' इति ।

अथ कदाचित् अस्वास्थ्यं प्राप्तवान् मान्त्रिकः चिकित्सार्थं वनमालिसमीपम् आगतवान् । वनमाली तं सम्यक् परीक्ष्य अवदत् – ''वार्धक्यकारणतः भवतः शरीरं दुर्बलं जातम् अस्ति । इतःपरं भवता विश्रान्तिः अधिकतया स्वीकरणीया । अद्य अहम् एकस्य दिनस्य निमित्तम् औषधं ददामि । श्वः पुनः परीक्ष्य औषधं दास्यते'' इति ।

''गृहतः एतावद्दूरं श्वः पुनरपि आगमनं मम क्लेशाय एव । श्वस्तनम् औषधं किं भवान् कस्यचित् द्वारा प्रेषयितुम् अर्हति ?'' इति अपृच्छत् मान्त्रिकः ।

वनमाली एतं प्रस्तावम् अङ्गीकृतवान् ।

अनन्तरदिने सः प्रतापद्वारा औषधं प्रेषितवान् । प्रतापं दृष्ट्वा मान्त्रिकः अवदत् – ''ह्यः स्वप्ने ग्रामदेवी प्रत्यक्षीभूय उक्तवती अस्ति यत् 'भवतः मृत्युः आसन्नः अस्ति इति । अतः एतेन औषधेन न किमपि प्रयोजनम् । मम तु चिन्ता यत् मया ज्ञाता विद्या मया सहैव समाप्तिं



गच्छति इति'' इति ।

तदा प्रतापः अवदत् – ''एतावता अहं वैद्यशास्त्रं किञ्चित् अधीतवान् अस्मि एव । यदि भवान् मां मन्त्रविद्यां बोधयेत् तर्हि भवतः आत्मा सन्तोषं प्राप्नुयात्'' इति ।

मान्त्रिकः सकृत् प्रतापम् अपश्यत् । ततः सः उत्पीठिकायाः उपरि स्थापितं अलङ्कृतं शिरस्त्रं तस्मै यच्छन् अवदत् – ''एतत् स्व-शिरसि स्थापयतु भवान् । मरणानन्तरम् अहम् एतस्मिन् वासं करिष्यामि किञ्चित्कालम् । एतत् भवान् यस्य शिरसः उपरि स्थापयति सः तस्मिन् दिने केन उपायेन लाभं प्राप्तुम् अर्हति इति अहं भवतः कर्णे वदिष्यामि । दिने एक-वारम् एव भवान् एतस्य उपयोगं कर्तुम् अर्हति'' इति ।

एतस्मात् प्रतापः नितरां सन्तुष्टः । ततः सः प्रतिगत्य वैद्यं वनमालिनम् अवदत् यत् मान्त्रिकस्य अन्त्यकालः सन्निहितः इति । शिरस्त्रप्राप्तिवार्ता तु तेन न श्राविता ।

तस्मिन् एव दिने मान्त्रिकः दिवं गतः । ग्रामजनाः सर्वे सम्भूय तस्य अन्त्यसंस्कारं निर्वर्तितवन्तः । ततः प्रतापस्य शिरस्त्रे किञ्चित् सञ्चलनं दृष्टम् इव । प्रतापेन ध्वनिः श्रुतः – ''अहं भवतः शिरस्त्रे वासम् आरब्धवान् अस्मि । इतःपरं भवान् एतस्य उपयोगं कर्तुम् अर्हति'' इति ।

प्रतापः वनमालिनः सहायकत्वं परित्यज्य अन्यं ग्रामं गतवान् । यदा सः केनचित् मार्गेण गच्छन् आसीत् तदा कर्णे ध्वनिः श्रुतः – ''पुरतः नीलयुतकं धृत्वा आगच्छतः जनस्य नाम नक्षत्रेशः इति । तं भवान् भविष्यवाणीं श्रावयतु'' इति ।

नीलवर्णयुतकधारी यदा समीपम् आगतः तदा तम् उद्दिश्य प्रतापः अवदत् – ''मम शिरस्त्रं वदति यत् भवतः नाम नक्षत्रेशः इति । कश्चन अनिरीक्षितः लाभः प्राप्यते भवता । सः कथं प्राप्यते इति मम शिरस्त्रं सूचयति । प्रतिफलरूपेण भवता मह्यं द्विशतं रूप्यकाणि दातव्यानि'' इति ।

अदृष्टपूर्वः अपि प्रतापः नाम उक्तवान् इत्यतः सः नीलवस्त्रधारी प्रतापस्य वचने विश्वसितवान् । प्रतापस्य नियमः तेन अङ्गी-कृतः अपि । प्रतापः तस्य शिरसि शिरस्त्रम् अस्थापयत् । तदा प्रतापेन ध्वनिः श्रुतः – ''भूषणनामकाय एतेन द्विसहस्रं रूप्यकाणि ऋणरूपेण दत्तानि आसन् । तानि प्रतिप्राप्स्यन्ते अद्य । तेषां प्रतिप्राप्तिसम्भावना नास्ति इति

एतेन निर्णीतम् आसीत्'' इति ।

प्रतापः तम् एतं विषयम् अवदत् । ततः तौ उभौ अपि भूषणस्य गृहं गतवन्तौ । भूषणः नक्षत्रेशम् आदरेण स्वागतीकुर्वन् - ''अहम् एव भवद्गृहं प्रति प्रस्थानं चिन्तयन् आसम् । तावता भवान् उपस्थितः । भवता ऋणरूपेण दत्तं द्विसहस्रं रूप्यकाणि स्वीक्रियन्ताम् । वृद्धिरूपेण द्विशतं रूप्यकाणि अपि'' इति अवदत् ।

नक्षत्रेशः पूर्वनियमानुगुणं प्रतापाय द्विशतं रूप्यकाणि दत्तवान्, भूरिभोजनम् अपि व्यवस्थापितवान् । एषा वार्ता ग्रामे अल्पे एव काले प्रसृता । अतः बहवः तत्समीपम् आगताः । प्रतापः दिने एकवारम् एव तत् शिरस्त्रं धरति स्म । तस्य भविष्यवाण्याः कारणतः केचन सम्पत्तिं प्राप्तवन्तः, पुनः केचन निधिम् । अन्ये केचन वाणिज्ये लाभं प्राप्तवन्तः ।

अल्पे एव काले प्रतापः धनवान् जातः । एवमेव वर्षम् अतीतम् । अथ कदाचित् प्रतापेन ध्वनिः श्रुतः - ''मम कारणतः बहवः जनाः लाभान्विताः जाताः । अतः मया शान्तिः प्राप्ता अस्ति । तस्मात् अहम् इतःपरं शिरस्त्रं प्रति न आगमिष्यामि'' इति ।

तस्मात् दिनात् शिरस्त्रात् ध्वनिः पुनः न निर्गतः । अतः प्रतापः 'इतःपरं मम ज्योतिषवाणी सफला न भविष्यति' इति उक्त्वा जनान् प्रतिप्रेषितवान् ।

किन्तु प्रतापस्य ज्योतिषस्य लाभं स्वीकर्तुम् इच्छवः केचन स्वार्थपराः वार्तां प्रसारितवन्तः यत् प्रतापः इदानीं धनवान् जातः अस्ति, अतः



मन्त्रशक्तौ सत्याम् अपि ईर्ष्यया सः भविष्यवाणीं न श्रावयति इति ।

एषः आक्षेपः तस्य देशस्य राज्ञः कर्णपथम् अपि आगतः । सः प्रतापम् आस्थानम् आनाय्य सानुरोधम् अवदत् यत् वस्तुस्थितिः वक्तव्या इति ।

तदा प्रतापः अवदत् - ''प्रभो ! मया अलङ्कृतं शिरस्त्रं प्राप्तम् आसीत् । तस्य महिम्नः कारणतः अहं कानिचन दिनानि भविष्यवाणीं श्रावितवान् । इदानीं तस्य महिमा अपगतः अस्ति'' इति ।

राजा एतस्मिन् वचने विश्वासं न प्राप्तवान् । सः क्रोधेन अवदत् - ''तस्मिन् शिरस्त्रे महिमा कथम् आगतः, कथं च गतः इति तु न उक्तं भवता । बुद्ध्या एव विषयं गोपयन् अस्ति भवान्'' इति ।

ततः मन्त्रिप्रभृतीन् तस्मात् प्रेषयित्वा एकान्ते सः प्रतापं मन्दस्वरेण अवदत् – ''अहं सम्राजः एकमात्रपुत्रीं विद्युल्लतां परिणेतुम् इच्छामि । किन्तु मन्त्रिणः वदन्ति यत् सम्राजः पुरतः एतस्याः इच्छायाः प्रकाशनात् तु स्थितिः विषमतां गच्छेत् इति । 'सम्राट् सामान्याय राज्ञे पुत्रीं दातुं न इच्छेत्' इति कथयन्ति ते । अतः मया चिन्त्यते यत् हठात् आक्रमणं कृत्वा विजयं प्राप्य विद्युल्लता वशीकरणीया इति । किम् एतदर्थं मम खड्गः समर्थः ?'' इति ।

राज्ञः एषः प्रश्नः प्रतापस्य शरीरे कम्पनम् उदपादयत् । सः कम्पमानेन हस्तेन राज्ञः शिरसि शिरस्त्रं स्थापितवान् । अनन्तरक्षणे राज्ञः हस्तात् खड्गः अधः अपतत् । राजा सिंहासनात् पतन् उच्चैः अवदत् – ''अये मान्त्रिक ! किम् एतत् कृतं भवता !'' इति ।

प्रतापः भयस्य कारणतः स्तब्धः सन् अतिष्ठत् । तावता तस्य कर्णयोः ध्वनिः श्रुतः – 'अलं भीत्या ! असमर्थाय शक्तिः दत्ता चेत् एवमेव अनर्थः सम्भवति इति जानन् अहं शिरस्त्रं प्रति पुनः आगतवान् अस्मि । गर्वेण व्यवहरन् राजा शिरस्त्रद्वारा असाध्यं कारयितुम् इष्टवान् । अचिरात् एव यत् सम्पद्यते तन्मात्रम् एव ज्ञापयति शिरस्त्रम् इति सः न जानाति स्म । त्वराकारणतः सः दुष्फलं प्राप्तवान् । सम्राजः पुत्र्याः परिणये इच्छा इदानीम् अपि अस्ति किम् इति भवान् तम् इदानीं पृच्छतु । सः इदानीं विद्युल्लतां परिणेतुम् इच्छति उत हस्तस्य शक्तिं सम्पादयितुम् ? यदि सः इच्छेत् तर्हि सः स्वस्य हस्तस्य पूर्वतनीं शक्तिं पुनः प्राप्तुम् अर्हति'' इति ।

प्रतापः आत्मना श्रुतं राजानं निवेदितवान् । तदा राजा अवदत् – ''मह्यं न विद्युल्लता आवश्यकी, न वा चम्पकलता । खड्गं ग्रहीतुं समर्थः हस्तः इष्यते मया'' इति ।

अपरक्षणे एव राज्ञः हस्तेन शक्तिः प्राप्ता । सः पतितं खड्गं हस्तेन गृह्णन् अवदत् – ''भोः, भवत्कारणतः मया योग्यः पाठः पठितः । उचितानुचितविवेकः प्राप्तः मया । शक्ति-सामर्थ्योपेतः दिवास्वप्ने न विश्वसिति । मया एतावत्पर्यन्तं दिवास्वप्नं पश्यता आनन्दः अनुभूयमानः आसीत् । इदानीं विवेकः प्राप्तः अस्ति मया'' इति । ततः सः प्रतापं यथोचितं सत्कृत्य प्रेषितवान् ।





# भयङ्करः खातः

## ३

*[केशवस्य पशुवृन्दं प्रविष्टवान् विलक्षणः जन्तुः ब्रह्मपुरस्य सेनापतिं तदीयं सैनिकं च अमारयत् । अपरः सैनिकः कथमपि आत्मानं रक्षन् राजधानीं गत्वा वार्तां निवेदितवान् । राजधान्यां विविधाः किंवदन्त्यः प्रसृताः । ताः श्रुत्वा भीतः केशवस्य पिता अरण्यम् आगत्य पुत्रं प्रवृत्तं सर्वं निवेदितवान् । तदनन्तरम् ...]*

पितुः वचनं श्रुत्वा केशवः आश्चर्यचकितः । अनतिदूरे एव तृणचरणे मग्नं विलक्षणं जन्तुं पश्यन् सः अवदत् - ''इदानीं सर्वम् अवगच्छन् अस्मि अहम् । रात्रौ विलक्षण-जन्तोः विषयः मया श्रावितः आसीत् खलु ? सः विलक्षणः जन्तुः एषः एव । रात्रौ एषः कथं गोष्ठात् निर्गतः इति तु न ज्ञायते । प्रातः मया गृहपरिसरे कुत्रापि एषः न दृष्टः । सः एषः अस्माकं पशुभिः सह सुखेन तिष्ठति । सेनापतिः उभौ सैनिकौ च एतस्य ग्रहणाय प्रयासं कृतवन्तः । एषः नीतः चेत् राजतः उपायनं किमपि प्राप्येत इति चिन्तितवान् स्यात् सः सेनापतिः । कश्चन भटः एतं पाशेन बद्ध्वा स्वस्य अश्वेन सह नयन् मया दृष्टः । प्रायः एषः तं सैनिकं सेनापतिं च मारितवान् स्यात् । सामान्यदर्शनात् तु भासते यत् एषः परमसाधुः इति । कश्चित् एषः मारितवान् इत्यत्र विश्वासः एव न भवति । किन्तु एतस्य शृङ्गे दृश्यमानस्य रक्तस्य दर्शनात् एव तस्मिन् वचने विश्वासः करणीयः भवति । एतस्य शृङ्गं पश्यतु तावत् ।




रक्तम् इदानीम् अपि लिप्तं दृश्यते तत्र'' इति ।

पुत्रस्य वचनं शृण्वन् पिता विलक्षणजन्तोः दिशि दृष्टिं प्रसारितवान् । केशवः हस्तग्रहण-पूर्वकं तं विलक्षणजन्तोः समीपं नीत्वा – ''पश्यतु अत्र । एतस्य मुखे अपि किञ्चित् रक्तं दृश्यते । शरीरे अपि तत्र तत्र रक्तं दृश्यते एव'' इति अवदत् ।

''नगरे या वार्ता मया श्रुता सा मिथ्या तु न । एषः सेनापतिं सैनिकं च मारितवान् अस्ति निश्चयेन । राजधानीतः सैनिकाः इतः एव आगच्छन्तः सन्ति । राजधान्यां वार्ता प्रसृता अस्ति यत् शत्रुदेशस्य गुप्तचरः भवान् वेष-परिवर्तनं कृत्वा अत्र तिष्ठति इति । अतः अचिरात् एव महती विपत्तिः काचित् आपतिष्यति'' इति अवदत् पिता परितः दृष्टिं प्रसारयन् ।

''सेनापतिना स्वयम् अपराधः कृतः । एतं निरपराधं जन्तुं ग्रहीतुं प्रयासः कृतः तेन । अतः सः एतेन मारितः । एतस्य शृङ्गे स्थितं रक्तं दृष्ट्वैव अहम् ऊहितवान् आसं यत् एषः किमपि कृत्वा आगतः स्यात् इति । एतस्यां घटनायां मम पात्रं तु किमपि नास्ति'' इति अवदत् केशवः ।

''दोषः कस्य इति कः अवगन्तुं प्रयतते ? सैनिकाः आगत्य आवां ग्रहीष्यन्ति एव । एतं खड्गं स्वीकरोतु तावत् । भवतः पितामहस्य मरणस्य अनन्तरम् एषः भित्तौ तिष्ठति स्म । एतस्य बाणानां च साहाय्येन भवान् आत्म-रक्षणं करोतु । राजसैनिकानाम् आधीन्यस्य स्वीकरणात् अपि विरोधं कृत्वा मरणम् अपि वरम् एव'' इति अवदत् पिता ।

पितुः हस्तात् खड्गं स्वीकुर्वन् केशवः अवदत् – ''भवतः हस्ते किमपि आयुधं नास्ति खलु !'' इति ।

''अहम् आत्मरक्षणं कथमपि करिष्यामि । अन्यच्च अहं वृद्धः अस्मि अपि । दीर्घजीवनेन किं प्रयोजनं मम ? अहं सैनिकानां दृष्टिपथात् आत्मानं कथमपि रक्षिष्यामि । एतान् पशून् अपि इतः अन्यत्र प्रेषयिष्यामि । तेषां सैनिकानां दृष्टिपथम् आगतानाम् एतेषां पशूनां का गतिः जायेत इति तु न सर्वथा ज्ञायते'' इति अवदत् पिता ।

अत्रान्तरे ताभ्याम् अश्वानां खुरपुटध्वनिः दूरात् श्रुतः । पिता पुत्रस्य दिशि दृष्टिं प्रासारयत् । केशवः झटिति विलक्षणस्य जन्तोः समीपं गत्वा – ''यदि सैनिकेभ्यः मया




आत्मा रक्षणीयः तर्हि एतम् आरुह्य पलायनं करणीयम् एव । एषः मद्विषये एवं किमर्थं साधुताम् आचरति इति तु न ज्ञायते'' इति स्वगतम् उक्त्वा तम् आरूढवान् ।

विलक्षणः जन्तुः क्षणं यावत् नेत्रे निमील्य अतिष्ठत् । ''हुँ, धाव्यताम् । यत्र इच्छा तं प्रदेशं प्रति धाव्यताम्'' इति अवदत् केशवः तस्य पृष्ठं मृदु ताडयन् । तदा सः जन्तुः पर्वतशिखरदिशि वेगेन अधावत् ।

विचित्रजन्तोः वेगं दृष्ट्वा केशवः भीतः । ग्रहणं यदि कदाचित् शिथिलं स्यात् तर्हि मम पतनं निश्चितम् इति अचिन्तयत् सः । विचित्रः जन्तुः तु पक्षी इव शिलातः शिलां प्रति वायौ एव सञ्चरन् पर्वतशिखरं प्रति अधावत् ।

सः पर्वतप्रदेशः घोरः आसीत् । महावृक्षाः, विशालाः गुल्माः, घोराः गुहाः च आसन् तत्र । गर्जन्तः व्याघ्राः आसन्, भल्लूकाः आसन्, सर्पाः चापि आसन् । मृत्युः जालं प्रसार्य स्थितः इव दृश्यते स्म तत्र ।

एतत् दृष्ट्वा केशवः अचिन्तयत् - 'इतः सजीवं प्रतिगमनं प्रायः अशक्यम् । अत्र अज्ञाते स्थले मरणात् अपि ब्रह्मपुरस्य सैनिकानां सम्मुखीकरणम् एव प्रायः वरम् अभविष्यत्' इति ।

'एषः विलक्षणः जन्तुः मां वञ्चितवान् अस्ति इति भाति । पित्रा यथा उक्तं तथा कश्चन राक्षसः स्यादपि अयम् । इदानीं प्रतीकारः तु कोऽपि न शक्यः । एतेन यत्र नीयते तत्र गन्तव्यम् । खड्गेन अहम् एतं मारयेयं चेदपि न लाभः । यतः अन्ये क्रूरजन्तवः मां मारयेयुः एव । अतः मम अन्तिमः क्षणः सन्निहितः इति तु निश्चितम्' इति यावत् सः चिन्तयन् आसीत् तावता विलक्षणः जन्तुः उन्नतायाः शिलातः कूर्दनं कृत्वा कस्याश्चित् विशालायाः गुहायाः पुरतः अतिष्ठत् ।

गुहा तु अन्धकारमयी । क्षणानन्तरम् अल्पः प्रकाशः दृष्टः । पुनः किञ्चित्-कालानन्तरम् अग्निः तत्र दृष्टः । कृष्णः धूमः अपि प्रसृतः दृष्टः । ह्रां, ह्रीं, हुँ, हुँ फट् इत्यादयः शब्दाः अपि श्रुताः ।

केशवः नितराम् आश्चर्यचकितः । सः खड्गहस्तः सन् विलक्षणजन्तुतः अधः कूर्दितवान् ।

अनन्तरक्षणे गुहायां दृष्टः सः अग्निः अदृश्यतां गतः । धूमः अपि न दृष्टः ।



मन्त्रध्वनिः अपि न श्रुतः । सर्वत्र नीरवता । एतत् परिवर्तनं केशवस्य आश्चर्यम् अवर्धयत् ।

'गुहायां कोऽपि अस्ति इति तु निश्चितम् । सः राक्षसः मान्त्रिकः तान्त्रिकः वा स्यात् । नरभक्षकः एव स्यादपि' इति अचिन्तयत् केशवः ।

'गुहायां यः आसीत् सः मया न दृष्टः अन्धकारकारणतः । गुहास्थः तु प्रकाशस्थं मां दृष्टवान् स्यादेव । मम ग्रहणाय सः किमपि तन्त्रं चिन्तितवान् स्यादपि । अतः अचिरात् एव इतः निर्गमनम् एव वरम्' इति निर्णीतवान् सः ।

एवं निर्णीय सः विलक्षणजन्तोः दिशि दृष्टिं पातितवान् । स तु समीपे न आसीत् । कस्याश्चित् शिलायाः उपरि स्थित्वा शृङ्गस्थं रक्तं घर्षणेन अपनयन् आसीत् सः । केशवः तत्समीपं गत्वा तं ग्रहीतुम् ऐच्छत् । विलक्षण-जन्तुः तु ततः उत्कूर्द्य उन्नतायां शिलायाम् अतिष्ठत् ।

केशवस्य निराशता प्रवृद्धा । 'सैनिकेभ्यः आपत् प्राप्येत इति विचिन्त्य मया एषः आश्रितः । एषः तु इदानीं मत्तः दूरं गच्छति । पादाभ्याम् इतः निर्गमनं न श्रेयसे । शिलानां पृष्ठतः स्थिताः क्रूरजन्तवः यदाकदाचिदपि आक्रमणं कर्तुम् अर्हन्ति' इति अचिन्तयत् सः ।

अन्यः मार्गः तु न आसीत् । 'मम हस्ते खड्गः तु अस्ति । धनुर्बाणादयः अपि सन्ति । एवं स्थिते किं भीत्या ?' इति विचिन्त्य सः जागरूकतया पदानि स्थापयन् गुहातः बहिः गन्तुम् उद्युक्तः ।

तावता अकस्मात् गुहायां प्रकाशः दृष्टः । कश्चन कुरूपः योगी तत्र दृष्टिगोचरतां गतः । श्मश्रुलः अपि आसीत् सः । तस्य शिरसि शिरस्त्राणम् अपि दृश्यते स्म । तं दृष्ट्वा आश्चर्यम् अनुभवन् केशवः क्षणकालं तत्रैव अतिष्ठत् ।

''वत्स ! अलं भीत्या । भीतेः नायम् अवसरः । अभयं ते ददामि । भवतः भवत्-पितुः च रक्षणदायित्वम् अहं निर्वक्ष्यामि'' इति वदन् सः कुरूपः गुहातः बहिः आगत-वान् ।

कुरूपस्य वचनं श्रुत्वा केशवः पुलकितः जातः । 'एषः कश्चित् अज्ञातपूर्वः चेदपि मद्विषयं समग्रतया जानाति । इतः पलायनाय प्रयत्नः तु व्यर्थः एव । एषः केन उद्देशेन मम मत्पितुः च रक्षणं कर्तुम् उद्यतः ? एतस्य

व्यवहारस्य आन्तर्यं किं स्यात्' इति यावत् केशवः चिन्तयन् आसीत् तावता सः कुरूपः अवदत् - ''वत्स ! किं मम शक्तौ सन्देहः भवतः ? आगच्छतु अत्र । गुहायाः अन्तः आगच्छतु तावत्'' इति ।

गुहां प्रति गन्तुम् उद्युक्तः सः केशवम् अपृच्छत् - ''किं मया सह आगमनात् भीतः भवान् ?'' इति ।

एतस्य प्रश्नस्य श्रवणात् केशवेन कोपः प्राप्तः । 'एषः मां भीरुं भावयति' इति विचिन्त्य सः अवदत् - ''भवता सह गुहां किं, पातालम् अपि अहम् आगन्तुं सज्जः एव । अरण्ये मम जन्म । अरण्ये एव प्रवृद्धः अपि अहम् । अतः भीतिं नाम्ना अपि न जानामि अहम् । मम तु प्रश्नः यत् मद्विषये, मत्पितुः विषये च भवता कथं ज्ञातम् इति'' इति ।

''भवान् कृपया मया सह गुहायाः अन्तः आगच्छतु । तत्र भवतः सन्देहः स्वयं निवृत्तः भविष्यति एव । यदि कश्चित् कालभैरवस्य नेत्राभ्यां पश्येत् तर्हि सः जगति जायमानं जनिष्यमाणं च विस्तरेण अवगन्तुम् अर्हति'' इति केशवम् एव पश्यन् अवदत् सः कुरूपः पुरुषः ।

केशवः तेन सह गुहां प्राविशत् । गुहायां सर्वत्र अन्धकारः आसीत् । किञ्चिदग्रे यदा गतं तदा किञ्चन बिलं दृष्टम् । तत्र शुनकाकारा शिलामूर्तिः काचित् दृष्टा । तस्याः नेत्रे अग्निगोलके इव प्रकाशेते स्म ।

''एषः एव कालभैरवः नाम । उपासकानां कृते कल्पवृक्षः एषः । शत्रूणां च कृते वज्रायुधम्'' इति उक्त्वा 'जय कालभैरव !' इति सकृत् उद्घोष्य सः केनचित् मूलेन मूर्तेः नेत्रे अस्पृशत् ।



झटिति द्वित्राणि पदानि पृष्ठतः संस्थाप्य – ''केशव ! तत्र दृश्यते भवतः पिता पशु-समूहः च । खड्गहस्तान् तान् दुष्टान् सैनिकान् तत्र पश्यतु तावत्'' इति उच्चैः हसन् अवदत् सः ।

केशवः कालभैरवस्य नेत्रेण अपश्यत् । तस्य पिता गुल्मस्य कस्यचित् पृष्ठतः उपविष्टः दृष्टः । तदीयाः पशवः इतस्ततः धावन्तः आसन् । तान् अनुसृत्य अश्वारोहिणः सैनिकाः धावन्ति स्म ।

एतत् दृष्टवतः केशवस्य मनः नितरां खिन्नम् । 'पिता तु भीत्या गुल्मस्य पृष्ठतः निलीय स्थितः दृश्यते । सैनिकाः पशूनां नयने प्रयासं कुर्वन्तः सन्ति । पशूनाम् अभावे पितुः जीवनाधारः एव न भविष्यति । किं तृणादिना तेन उदरं पूरणीयं भवेत् ? एतादृशे अवसरे मया ततः आगन्तव्यं न आसीत् । पितरम् एकाकिनं त्यक्त्वा अत्र आगच्छता मया प्रमादः आचरितः' इति चिन्तयन् केशवः नितरां खिन्नः ।

केशवस्य भावम् अवगतवान् इव सः कुरूपः – ''केशव ! अलं चिन्तया । भवतः पितरं पशून् च अहं रक्षिष्यामि'' इति वदन् गुहातः बहिः गतवान् ।

''शिष्य ! शिष्यवर ! भवान् गत्वा तान् सैनिकान् भाययित्वा ततः प्रेषयतु । तान् पशून् रक्षतु च'' इति उच्चस्वरेण अवदत् कुरूपः ।

कालभैरवस्य नेत्राभ्यां पश्यता केशवेन किञ्चन विलक्षणं दृश्यं दृष्टम् । कश्चन मनुष्य-मुखः, महापक्षयुतः उलूकः सैनिकानाम् उपरि उड्डयनम् अकरोत् । तं घोरपक्षिणं दृष्ट्वा सैनिकाः आक्रन्दनं कुर्वन्तः अरण्ये धावित-वन्तः इतस्ततः ।

'इतःपरं ते सैनिकाः मम पितुः पशूनां च हानिं कल्पयितुं न अर्हन्ति । ते तु विलक्षणस्य उलूकस्य दर्शनमात्रात् एव भीताः सन्ति । अतः इतः परम् एतस्यां दिशि दृष्टिक्षेपम् अपि कर्तुं न अर्हन्ति ते । तस्मात् अपायस्य सम्भावना अपगता इव' इति चिन्तयतः केशवस्य मनः निश्चिन्तं जातम् ।

'अपूर्वां शक्तिं वहन् सः विलक्षणः जन्तुः, एषः कुरूपः मान्त्रिकः च न मम वैरिणौ, अपि तु सुहृदौ एव' इति अचिन्तयत् सः ।



# वेताल-कथा

# यथार्थं चित्रम्

त्रिविक्रमः तु स्वीकृतं कार्यं परित्यक्तुम् अनिच्छन् वृक्षस्य समीपं गतवान् । वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान् । ततः यथापूर्वं मौनेन श्मशानं प्रति प्रस्थितवान् सः । तदा शवान्तर्गतः वेतालः तदीयं मौनं भञ्जयितुम् इच्छन् अवदत् - ''अये राजन् ! भवान् कस्य सङ्कल्पस्य निमित्तम् एतं महान्तं परिश्रमं कुर्वन् अस्ति ? राजानः अधिकारमदेन आवृताः सन्तः कदाचित् किमपि निर्णयन्ति । किन्तु तेषाम् एतस्य निर्णयस्य कः आशयः इति तु केनापि न ज्ञायते । न केवलं राजोद्योगिनां विषये, अपि तु स्वतन्त्राणां कलाकाराणां विषये



अपि तैः दुर्व्यवहारः क्रियते कदाचित् । तैः कः सत्क्रियते, कश्च दण्ड्यते इति तु न ज्ञायते केनापि । उग्रसिंहः नाम राजा अधिकारमदमत्तः सन् विवेकहीनतया परस्परविरुद्धान् निर्णयान् पूर्वं श्रावितवान् आसीत् । भवतः जागरणाय मार्गायासपरिहाराय च तस्य कथां विस्तरेण श्रावयामि । श्रद्धया शृणोतु तावात्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा –

उग्रसिंहः जयन्तपुरस्य राजा । यद्यपि सः शासने दक्षः, किन्तु महाशीघ्रकोपी । अतः एव लघुनः अपराधस्य निमित्तम् अपि महान्तं दण्डं विदधाति स्म सः । अतः राजोद्योगिनः सर्वदा भयम् अनुभवन्ति स्म – अस्माकं राजा कदा कं कीदृशेन दण्डेन दण्डयिष्यति इति तु न ज्ञायते इति ।

कदाचित् उग्रसिंहस्य मनसि इच्छा उत्पन्ना – मया मदीयं चित्रं लेखनीयम् इति ।

एतां वार्तां ज्ञात्वा बहवः कलाकाराः राजधानीं प्रति आगताः । तावता राजा अघोषयत् यत् यः उत्तमं चित्रं रचयति तस्मै सहस्रं सुवर्णनाणकानि दास्यन्ते, यस्य चित्रं मम प्रीत्यै न भवति सः दशभिः कशाप्रहारैः दण्ड्यते च इति । चित्रकाराः जानन्ति स्म एव यत् राजा क्रोधशीलः इति । अतः भीताः सन्तः ते प्रतिगताः ।

किन्तु नागवर्मा नाम कश्चन चित्रकारः एतादृशः न आसीत् । सः धैर्येण राज्ञः चित्रं निर्मातुम् अग्रे आगतः । राजभवनसमीपे एव तस्य वासाय राज्ञा व्यवस्था कल्पिता । चित्रस्य रूपदर्शित्वेन सः प्रतिदिनं किञ्चित्कालं कलाकारस्य पुरतः उपविशति स्म । नागवर्मा एकाग्रचित्ततया तदीयं चित्रं रचितवान् । यदा चित्रं सिद्धं तदा सः तत् आस्थानं प्रति आनीतवान् ।

जवनिकाम् अपसार्य राजा चित्रं दृष्टवान् । नितरां क्रुद्धः सः – ''किम् एतदपि चित्रम् इत्युच्यते ? किं भवान् चित्रकारः ? एतत् चित्रं मम सर्वथा न'' इति अवदत् ।

सभासदः अपि एतमेव आशयं प्रकटितवन्तः ।

महाचित्रकारः एषः किमर्थम् एतादृशं चित्रं रचितवान् इति न ज्ञायते इति ते परस्परम् अवदन् ।

पुरस्कारः प्राप्तव्यः इत्येषा नागवर्मणः इच्छा भग्ना । तेन दश कशाप्रहाराः प्राप्ताः । अपमानं प्राप्य सः विना वचनं ततः प्रतिगतवान् ।

कानिचन दिनानि अतीतानि । अथ कदाचित् विजयः नाम चित्रकारः राजानं दृष्ट्वा अवदत् – ''महाराज ! भवतः चित्रं लेखनीयम् इति इच्छया सुदूरात् प्रदेशात् अहम् आगतवान् अस्मि । कृपया मह्यम् एतदर्थम् अवकाशः दीयताम्'' इति ।

''असमर्थैः कलाकारैः क्रियमाणायाः चित्रनिर्माणेच्छायाः विषये मम तु नितराम् असन्तोषः । अतः एव योग्यं चित्रं यः न निर्माति तं कठोरतया दण्डयामि अहम् । पूर्वं तादृशः दशभिः कशाप्रहारैः दण्ड्यते स्म । इदानीं तु अयोग्यः चित्रकारः विंशत्या कशाप्रहारैः दण्ड्यते मया । किम् एतत् अनुमन्यते भवता ? विचिन्त्य वदतु तावत्'' इति अवदत् राजा ।



''अङ्गीकरोमि महाराज !'' इति अवदत् विजयः । तस्मिन् एव दिने सः कार्यारम्भम् अकरोत् अपि ।

सप्ताहाभ्यन्तरे एव तदीयं चित्रनिर्माणं समाप्तम् । सः आत्मना निर्मितं तत् चित्रं राज्ञः पुरतः उपास्थापयत् । चित्रे राज्ञः मुखं क्रूरतया दृश्यते स्म ।

तत् चित्रं दृष्ट्वा उग्रसेनः महता क्रोधेन अवदत् – ''किम् अहम् एवं क्रूरः अस्मि ? कियत् धाष्टर्यं भवतः ?'' इति ।

''क्षन्तव्योऽहं महाराज ! भवतः यथार्थचित्रं निर्मातव्यम् इति एकमात्रम् उद्देशः आसीत् मम । हरिणः जलपानसमये अपि भीत्या इतस्ततः दृष्टिं प्रसारयन् भवति । व्याघ्रः शान्तमुखः भवति । तथापि तस्य अन्तरङ्गे क्रूरता भवति एव । चञ्चलनेत्रता हरिणस्य स्वभावः । क्रूरदृष्टिता व्याघ्रस्य स्वभावः । चित्रकारः कदापि एतां सहजतां न विस्मरेत् महाराज !'' इति अवदत् विजयः ।

''एतस्य एतत् तात्पर्यं न सिद्धं यत् मम चित्रम् एवं क्रूरतायुक्तम् एव निर्मातव्यम् इति । यदि अहम् इच्छेयं तर्हि भवन्तं कठोरतया दण्डयेयम् । एतत् स्मर्यते खलु भवता ?'' इति हुङ्कुर्वन् अवदत् राजा ।

''जानामि एव महाराज ! कलाकारः सदापि सत्यवादी एव भवेत् । यः सत्यवादी भवति सः कुतश्चित् अपि भीतः न भवति । अतः भीतिः तु सर्वथा नास्ति मम । किन्तु मम किञ्चन निवेदनम् अस्ति एतद्विषये । एतत् चित्रं सभासद्भ्यः प्रदर्शयितुम् अनुज्ञा दातव्या भवता । तेषाम् आशयः अपि एतद्विषये मया ज्ञातव्यः'' इति विनयेन निवेदितवान् विजयः ।



राजा सभासदः पश्यन् उच्चेन स्वरेण अपृच्छत् - ''किम् एतत् चित्रं मम स्वरूपं द्योतयति ?'' इति ।

चित्रे क्रुद्धः राजा यथावत् दृश्यते स्म । अतः सभासदः निराकरणवचनं वक्तुं न शक्ताः । अङ्गीकारं सूचयितुं तु धैर्यं नास्ति तेषाम् ।

तदा वृद्धः मन्त्री उत्थाय अवदत् - ''महाराज ! एतत् चित्रं चित्रयतः चित्रकारस्य उद्देशः कः इति तु न ज्ञायते । किन्तु एतत् भवतः स्वभावविशेषं सम्यक् एव अभिव्यञ्जयति इत्यत्र नास्ति सन्देहः । भवतः हावभावादिकं, भवदीयं व्यक्तित्वं च सम्यक् एव अभिव्यञ्जयति एतत्'' इति ।

मन्त्रिणः कथनं श्रुत्वा सभासदः करताडनं कृतवन्तः ।

एतत् दृष्ट्वा राजा क्षणकालं स्तब्धः । ततः सः विजयाय सहस्रं सुवर्णनाणकानि दत्त्वा चित्रं ततः स्वीकृत्य स्वस्य प्रकोष्ठे स्थापितवान् ।

राजा प्रतिदिनं प्रातः उत्थाय तत् चित्रम् आसक्त्या पश्यति स्म । चित्रे यादृशं क्रोधयुक्तं मुखं दृश्यते तादृशं मुखं मम न स्यात् इति चिन्तयन् सः शान्तमुखार्थं प्रयतते । यदा कोपः प्राप्यते तदा तेन चित्रं स्मर्यते स्म । अतः सः विनम्रः भवति स्म । एवम् अल्पे एव काले तदीया कोपशीलता अपगता । सः विजयं पुनरपि आहूय अवदत् यत् मम अपरं चित्रं निर्मीयताम् इति ।

तदा विजयः अवदत् - ''महाराज ! एतदवसरे नागवर्मा भवतः चित्रं निर्मायात्, न तु अहम् । यदि भवतः अनुज्ञा स्यात् तर्हि तम् अहम् अत्र आनाययामि । तेन रचितं पूर्वतनं चित्रं पुनरेकवारं परिशीलयतु भवान् । तत्रत्यं प्रशान्तगम्भीरं भवतः मुखं चित्रकारस्य नैपुण्यं प्रमाणीकरोति'' इति ।

अपरस्य कलाकारस्य विषये विजयः यम् आदरभावं दर्शितवान् तस्मात् राजा नितरां सन्तुष्टः । सः विजयम् अभिनन्द्य नागवर्मणा रचितं चित्रम् आनायितवान् । नागवर्मणः कौशलं पुनः पुनः प्रशंसन् सः तम् आस्थानकलाकारत्वेन नियुक्तवान् । तस्य सत्कारम् अपि कृतवान् सः ।

वेतालः एवं कथां समाप्य अवदत् - ''राजा उग्रसिंहः पूर्वं तु नागवर्मविषये नितरां क्रुद्धः आसीत् । यतः तेन रचितं चित्रम् अनुत्कृष्टम् अपमानकरं च भावितवान् आसीत् सः ।

तथापि तम् एव किमर्थं पुरस्कृतवान् सः ? तं पूर्वं कदाचित् दण्डितवान् अपि आसीत् खलु राजा ? तादृशः चित्रकारः किमर्थं पुरस्कृतः ? किमर्थं वा सः आस्थानकलाकारत्वेन नियुक्तः च ? विजयः तु वस्तुतः अप्रियं चित्रं रचितवान् आसीत् । तथापि तस्मिन् राज्ञः आदरभावः किमर्थम् ? किं चित्रम् उत्तमं, किं च अनुत्तमम् इति निर्णये राज्ञः सामर्थ्यं नास्ति इति खलु एतस्मात् सिद्धं भवति ? उभयोः अपि सत्कारः तु महते आश्चर्याय खलु ? मम एतेषां प्रश्नानाम् उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत् अचिरात् एव'' इति ।

तदा त्रिविक्रमः अवदत् - ''राजा उग्रसिंहः आदौ तु अन्वर्थनामा एव आसीत् इति तु सत्यम् । किन्तु गच्छता कालेन तस्मिन् परिवर्तनं जातम् । सः विजयम् अपि दण्डयितुम् इष्टवान् आसीत् । किन्तु वृद्धस्य मन्त्रिणः सभासदां च अभिप्रायं तिरस्कर्तुं सः न शक्तवान् । यदा दिने दिने तस्य चिन्तनं प्रवृद्धं तदा तेन अवगतं यत् दोषः न चित्रे, अपि तु मयि अस्ति इति । अतः एव तेन अपरं चित्रं निर्मापयितुम् इष्टम् । यदा नागवर्मणः चित्रं दृष्टं तदा अवगतं - तस्मिन् चित्रे दर्पः दम्भः वा नास्ति इति । पूर्वं सभासदः तदेव चित्रं दृष्ट्वा अपि सन्तोषं न प्रकटितवन्तः आसन्, यतः राज्ञः तादृशं रूपं न दृष्टम् एव आसीत् तैः । किन्तु राज्ञः व्यवहारे यदा परिवर्तनं दृष्टं तदा शान्तमुखयुक्तं तदेव चित्रं तेषां प्रियं जातम् । अतः एव राजा नागवर्माणं सत्कृतवान् । क्रोधशीलता यदा पूर्णा आसीत् तदा राजा चित्रस्य श्रेष्ठतां न अवगतवान् आसीत् । यदा तस्मात् स च दोषः अपगतः तदा एव चित्रस्य वैशिष्ट्यं तेन ज्ञातम् । चित्रकारौ उभौ अपि श्रेष्ठौ एव । व्यक्तेः वास्तविकचित्रस्य निर्माणे विजयः दक्षः । नागवर्मा तु व्यक्तेः दोषान् अपरिगणयन् तदीयां श्रेष्ठतां मनसि निधाय अपूर्वं चित्रं रचयितुं समर्थः । अतः एव विजयः तम् एव श्रेष्ठं भावितवान् । उभयोः अपि सत्कारं कुर्वता राज्ञा उचितम् एव कृतम्'' इति ।

एवं वदता राज्ञा मौनभङ्गः कृतः आसीत् । अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा वृक्षस्य शाखाम् अवलम्बितवान् ।



# राजकुमारस्य साहाय्यं कृतं मूषकैः पिपीलिकाभिः च

पूर्वं प्रतापदुर्गं महेन्द्रप्रतापः नाम राजा पालयति स्म । सः प्रजारञ्जकः शासन-निपुणः च । तस्य पुत्रस्य नाम प्रतापवर्मा इति । यद्यपि सः युवराजः, तथापि प्रजानां प्रीतिः विशेषतः सम्पादिता आसीत् तेन । तत्र कारणं तदीया मृदुहृदयता प्राणिदया च ।

यद्यपि सः धनुर्विद्यायां विशेषनिपुणः, तथापि पशुपक्षिणः तु न मारयति स्म । मृगयाविनोदादिषु सर्वथा अनासक्तः आसीत् सः ।



अथ कदाचित् त्रयः आगन्तुकाः राज्ञः आस्थानम् आगताः । तेषु त्रिषु एकैकस्यापि एकैकं विशिष्टं सामर्थ्यम् आसीत् । तेषु एकः धनुर्विद्यायाम् असाधारणः । अपरः वायुवेगेन धावने समर्थः । तृतीयः तु अपूर्वया दृष्टि-शक्त्या यत्किमपि द्रष्टुं समर्थः । तेषाम् एतत् अपूर्वं सामर्थ्यं राजकुमारे महत् कौतूहलम् अजनयत् ।

अतः सः तैः सह सम्भाषमाणः अधिकं कालम् अयापयत् । तस्मात् तस्मिन् प्रबला इच्छा उत्पन्ना यत् मया एतैः सह प्रयाणं करणीयम् इति । एतदर्थं सः पितुः अनुज्ञां प्रार्थितवान् ।

किन्तु महेन्द्रप्रतापः झटिति एतत् न अनुमतवान् । तदा ते त्रयः अवदन् – 'राजकुमारस्य रक्षणदायित्वं वयं निर्वक्ष्यामः । भवान् निश्चिन्तः भवतु' इति ।

एतस्मिन् वचने विश्वस्य राजा युवराजस्य प्रयाणम् अनु-मतवान् । ततः अनन्तरदिने प्रतापवर्मा त्रिभिः नूतनमित्रैः सह

प्रस्थितवान् ।

प्रयाणसमये कस्मिंश्चित् गर्ते पतितः कश्चन मूषकः तेन दृष्टः । गर्तः जलमयः आसीत् । मूषकः उपरि आगन्तुं पुनः पुनः प्रयासं करोति स्म । किन्तु सफलतां प्राप्तुं न शक्नोति स्म । एतत् लक्षितवान् युवराजः गर्तं लक्ष्यीकृत्य एकं बाणं प्रयुक्तवान् । तं बाणम् अवलम्ब्य मूषकः उपरि आगमने समर्थः जातः ।



उपरि आगतः सः मूषकः युवराजं कृतज्ञतापूर्वकं स्मरन् अवदत् – ''अये राजकुमार ! भवता अहं रक्षितः यत् तदर्थम् अहं नितरां कृतज्ञः अस्मि । अहमस्मि मूषकराजः । मम राज्ये स्थिताः सर्वे मूषकाः भवतः सेवायै सज्जाः । यदा किमपि साहाय्यम् आवश्यकं भवति तदा भूमौ मुखं निधाय भवान् माम् आह्वयतु । झटिति वयं सर्वे अपि भवत्समीपे उपस्थिताः भवामः'' इति ।

राजकुमारः विनयेन तम् अभिवन्द्य अग्रे अगच्छत् ।

किञ्चिद्दूरं यदा गतं तदा तत्र काचित् पिपीलिकापङ्क्तिः तेन दृष्टा । अनन्तरक्षणे एव समीपगृहवासिना पात्ररिक्तीकर्त्रा केनचित् पातितं जलं तासाम् उपरि अपतत् । काश्चन मृताः । पुनः काश्चन प्लवमानाः जाताः । एतत् दृष्टवान् युवराजः झटिति एव गमनं स्थगयित्वा समीपस्थं वृक्षम् आरुह्य पर्णानि उत्पाट्य जलस्य उपरि अपातयत् । तस्मात् पिपीलिकाः तानि आरुह्य शुष्कं प्रदेशं प्रति गन्तुं शक्ताः अभवन् ।

अपायरहितं स्थलं प्राप्य ताः अवदन् – ''युवराज ! नितराम् उपकृताः स्मः वयम् । यदा अस्माकं साहाय्यम् आवश्यकं भवति तदा भवान् करताडनेन अस्मान् आह्वयतु । क्षणाभ्यन्तरे वयम् उपस्थिताः भविष्यामः'' इति ।

अनन्तरदिने ते चन्द्रपुरस्य राजधानीं प्राप्तवन्तः । तस्य देशस्य राजा चन्द्रसेनः । रात्रौ वासाय स्थलम् अन्विष्यद्भिः तैः ज्ञातं यत् राजा चन्द्रसेनः क्रूरस्वभावः, तस्य पुत्र्याः चन्द्रमत्याः परिणयाय आगतान् बहून् राजकुमारान् असाध्यानि त्रीणि कार्याणि उक्त्वा



एतत् दृष्ट्वा चन्द्रसेनः – 'भवान् मया उच्यमानानि कार्याणि साधयितुं नार्हति' इति भावं प्रकटयन् उच्चैः हसितवान् ।

तदीयः प्रथमः नियमः आसीत् – हिमालयस्य उपत्यकातः पीतानि पुष्पाणि उत्पाट्य आनेतव्यानि इति ।

''तानि आनीय राजकुमार्याः शिरसि धारणीयानि । अत्र नियमः यत् प्रस्थानात् अनन्तरदिनस्य सूर्योदयात् पूर्वम् एव तानि आनेतव्यानि, येन तेषां वर्णापगमः न स्यात्'' इति असूचयत् चन्द्रसेनः ।

सर्वथा असाध्यम् एव कार्यम् एतत् । सुदूरे स्थितं हिमालयं प्रति गमनं, तत्र पुष्पाणाम् अन्वेषणं, पुनः दिनाभ्यन्तरे तेषाम् आनयनं च असाध्यम् एव आसीत् । तथापि प्रतापवर्मा न भीतः । सः मित्रैः सह समालोचनम् अकरोत् ।

अपूर्वदृष्टिमान् सुहृत् स्वशक्त्या स्पष्टतया अवदत् यत् तानि पुष्पाणि हिमालये कुत्र सन्ति इति ।

वेगगामी अवदत् – ''अलं चिन्तया । श्वः सूर्योदयाभ्यन्तरे तानि अहम् आनीय दास्यामि'' इति । अनन्तरक्षणे एव सः ततः निर्गतवान् । अन्ये सर्वे तस्य आगमनं प्रतीक्षमाणाः स्थितवन्तः ।

मध्यरात्रसमये दृष्टिशक्तिमान् सुहृत् अवदत् – ''अस्माकं सुहृत् पुष्पाणि सङ्गृह्य प्रतिप्रस्थितवान् अस्ति एव'' इति ।

अरुणोदयसमये वेगगामी सुहृत् पुष्पैः सह आगतवान् एव । प्रतापवर्मा तानि स्वीकृत्य

असफलान् तान् कारागारे स्थापितवान् अस्ति इति ।

कारगारस्थानां राजकुमाराणां पितृभिः बहुधा प्रार्थितः सन् अपि राजा चन्द्रसेनः तेषां कारागारात् मोचनं न अङ्गीकृतवान् आसीत् । प्रतापवर्मा राजकुमार्याः परिणये विशेषतः आसक्तिमान् न, तथापि राजकुमाराणां मोचने तु उत्सुकः जातः ।

अनन्तरदिने सः राजास्थानं गत्वा चन्द्रसेनं दृष्ट्वा राजकुमार्याः परिणये इच्छां प्रकटितवान् । चन्द्रसेनः नियमान् अश्रावयत् । प्रतापवर्मा तान् अङ्गीकृतवान् ।

राजप्रासादं गतवान् । एतत् दृष्ट्वा चन्द्रसेनः सन्तोषेण हसितवान् । कार्यं कथं साधितम् इति तु न पृष्टं तेन । द्वितीयं कार्यं सः विवृतवान् ।

सः भटान् आदिश्य गोणीत्रयमितं धान्यम् आनायितवान् । ततः प्रासादस्य अङ्गणे धान्यं मृत्तिकया मिश्रीकृत्य राशीकृतम् ।

राजा असूचयत् – "श्वः प्रातःकालाभ्यन्तरे धान्यानि मृत्तिकातः पृथक्करणीयानि । धान्यं गोणीत्रयमितम् एव स्यात्" इति ।

वस्तुतः एतदपि असाध्यम् एव कार्यम् । प्रतापवर्मा क्षणकालम् अचिन्तयत् । आगमनमार्गे रक्षिताः पिपीलिकाः तेन स्मृताः । सः ताः स्मृत्वा करताडनम् अकरोत् । क्षणाभ्यन्तरे लक्षशः पिपीलिकाः उपस्थिताः ।

ताभिः किं करणीयम् इति निर्दिश्य प्रतापवर्मा वसतिगृहं प्रति गतवान् । अनन्तरदिने प्रातःकालाभ्यन्तरे प्रासादस्य प्राङ्गणे पृथक्कृतानां धान्यानां महान् राशिः स्थितः आसीत् ।

राजा चन्द्रसेनः आगत्य भटान् आज्ञापयत् यत् गोणीषु धान्यं पूरयन्तु इति । भटैः तथैव कृतम् । धान्यं गोणीत्रयमितम् आसीत् एव । एतत् दृष्ट्वा राजा नितराम् आश्चर्यचकितः । एतदवसरे अपि सः कार्यसाधनमार्गं न पृष्टवान् एव ।

"प्रतापवर्मन् ! भवान् महाबुद्धिमान् एव स्यात् नाम । कार्यद्वयम् अपि केनापि उपायेन साधितवान् स्यात् अपि । किन्तु मया उच्यमानं तृतीयं कार्यं भवता साधयितुम् अशक्यम् एव । प्रासादस्य पुरतः कश्चन महावृक्षः अस्ति । एषः वृक्षः श्वः प्रातःकालाभ्यन्तरे चूर्णीकृतः स्यात् । किन्तु अत्र नियमः यत् वृक्षः न कर्तनीयः इति । किम् एतत् साधयितुं शक्येत भवता ?" इति अपृच्छत् चन्द्रसेनः ।

प्रतापवर्मा बहिः गत्वा सकृत् समग्रं वृक्षम् अपश्यत् । ततः भूमौ मुखं निधाय अवदत् – "मूषकराज ! मम साहाय्यार्थम् आगच्छतु कृपया" इति ।

क्षणाभ्यन्तरे शतशः मूषकाः तत्र उपस्थिताः । अनन्तरदिने प्रातःकालाभ्यन्तरे तत्र वृक्षः न आसीत् । चूर्णीकृतानां वृक्षखण्डानां



राशिः दृश्यते स्म तत्र ।

प्रतापवर्मा आस्थानम् आगत्य चन्द्रसेनं दृष्ट्वा कार्यसमाप्तिम् असूचयत् । राजाज्ञायाः अनुगुणं भटाः गत्वा परिशीलितवन्तः । तैः प्रतापवर्मणः कथनं दृढीकृतम् ।

''प्रातपवर्मन् ! मया सूचितानि त्रीणि अपि कार्याणि साधितानि भवता । अतः श्वः प्रातः राजकुमारीं परिणेतुं भवान् सिद्धः भवतु'' इति अवदत् चन्द्रसेनः ।

तदा प्रतापवर्मा असूचयत् यत् कारागारे स्थापिताः सर्वे राजकुमाराः भवता मोचिताः चेदेव मया राजकुमार्याः परिणयः अङ्गीकरिष्यते इति ।

प्रतापवर्मा एतादृशीं काञ्चित् अपेक्षां प्रकाशयेत् इति चन्द्रसेनेन न ऊहितम् अपि आसीत् । अतः सः प्रतापवर्मणः विषये नितराम् असन्तुष्टः जातः ।

नियमानुगुणं राजकुमारी तु प्रतापवर्मणे दातव्या एव आसीत् । ततः विवाहः महता वैभवेन सम्पन्नः ।

प्रतापवर्मा पत्न्या त्रिभिः मित्रैः च सह ततः प्रस्थितवान् । चन्द्रसेनेन तेषां प्रयाणाय अश्वाः व्यवस्थापिताः आसन् ।

यदा प्रतापवर्मादयः निर्गताः तदा राजा चन्द्रसेनः भटान् कोपेन आज्ञापितवान् – ''भवन्तः गत्वा प्रतापवर्माणं तन्मित्राणि च आक्रम्य बद्ध्वा आनयन्तु'' इति ।

राजकुमाराणां विमोचनं प्रतापवर्मणा यत् कारितं तद्विषये असन्तोषः एव एतस्याः आज्ञायाः कारणम् आसीत् ।

भटाः तान् अनुसृत्य गतवन्तः । प्रतापवर्मा तु किञ्चिदपि न भीतः । सः धैर्येण भटान् लक्ष्यीकृत्य बाणप्रयोगम् आरब्धवान् । तदीयः सुहृत् अपूर्वं बाणप्रयोगकौशलं प्रदर्शितवान् । तस्मात् बहवः भटाः मरणं प्राप्तवन्तः । शिष्टाः सैनिकाः ततः भीत्या धावितवन्तः । विजयं प्राप्तवान् युवराजः प्रतापवर्मा विना विघ्नं प्रतापदुर्गं प्रति गतवान् ।

त्रिभिः मित्रैः, सुन्दर्या पत्न्या च सह आगतं पुत्रं दृष्ट्वा राजा महेन्द्रप्रतापः नितरां सन्तुष्टः जातः । सः पुत्रस्य प्रशंसां बहुधा कृतवान् ।



महापुरुषाणां जीवनस्य घटना - (१)

# विवेकानन्दः क्रूरजन्तवः च

*स्वामी विवेकानन्दः (१८६२-१९०२) रामकृष्णपरमहंसस्य शिष्येषु प्रमुखः आसीत् । तदीयं पूर्वाश्रमीयं नाम नरेन्द्रनाथः इति । आध्यात्मिकमार्गेण भारतस्य जागरणं सः स्वस्य जीवितस्य लक्ष्यं कृतवान् आसीत् । चिकागोनगरे (१८९३) धर्मसंसदि तेन कृतम् अपूर्वं भाषणं जगद्विख्यातं जातम् । सः भारतस्य वैशिष्ट्यं विदेशीयं जगत् ज्ञापयितुम् अपि प्रयासं कृतवान् ।*



गुरुवर्यस्य रामकृष्णपरमहंसस्य दिवङ्गतेः अनन्तरं विवेकानन्दः तदीयान् सन्देशान् सर्वत्र प्रसारयितुं देशे प्रवासं कृतवान् ।

कदाचित् सः वाराणस्यां निर्जनेन मार्गेण गच्छन् आसीत् । तदा कश्चन धृष्टानां वानराणां गणः तम् अन्वसरत् । सः गमनवेगम् अवर्धयत् । वानराः अपि वेगेनैव तम् अनुसृतवन्तः । यदा तेन धावितं तदा ते अपि अनुसृत्य धावितवन्तः । विवेकानन्द-वानरगणयोः मध्ये स्थितम् अन्तरं क्षणे क्षणे न्यूनीभवत् आसीत् ।

तावता मार्गपार्श्वे उपविष्टः कश्चन संन्यासी उच्चस्वरेण अवदत् - ''मा धाव । तान् धृष्टान् सम्मुखीकुरुष्व'' इति ।

विवेकानन्दः झटिति धावनं स्थगितवान् । वानराः तत्समीपम् आगताः एव । विवेकानन्दः तान् तीक्ष्णदृष्ट्या अपश्यत् धैर्येण । एतस्मात् भीताः ते वानराः सर्वे ततः पलायितवन्तः क्षणाभ्यन्तरे एव ।

न्यूयार्कनगरे एतां घटनाम् उदाहरन् स्वामी

विवेकानन्दः अवदत् - ''मया इतः उत्तमः पाठः पठितः - अपायः धैर्येण सम्मुखीकरणीयः इति । वयं यदि समस्यातः दूरं गच्छेम तर्हि वानराः इव ताः अपि अस्मान् अनुसरिष्यन्ति । ततः विमुक्तिः प्राप्तव्या चेत् आदौ आत्मा जेतव्यः । अस्माभिः कष्टानि धैर्येण सम्मुखीकरणीयानि । धीरः एव जीवति । कापुरुषः जीवने किमपि साधयितुं न अर्हति'' इति ।

विवेकानन्दः यथा बुद्धिमान् तथैव धीरः अपि । सत्त्ववान् सः भीतिं सर्वथा न जानाति स्म । देशस्य भव्योदर्कविषये सः आशावान् आसीत् एव सर्वदा । तथापि अत्रत्यानां स्वार्थपरतां देशस्य दुरवस्थां च मनसि आकलयता तेन कदाचित् महान् विषादः प्राप्तः । विषण्णमनस्कः सः अरण्यं प्राविशत् । आहारसेवनचिन्ताम् अपि अकुर्वन् सः समग्रं दिनं निरुद्देशम् अरण्ये अटितवान् । किमर्थं जीवनीयम् इति प्रश्नः तं बाधते स्म । अटनात् चिन्ताभरतः च श्रान्तः सः कस्यचित् वृक्षस्य अधः उपाविशत् । सूर्यः अस्तं गतः । तत्र सर्वत्र अन्धकारः प्रसृतः । अन्धकारे तेन प्रकाशमाने उभे नेत्रे दृष्टे । कश्चन क्रूरः व्याघ्रः गुल्मतः निर्गत्य तस्य समीपम् आगच्छत् ।

एतत् दृष्ट्वा विवेकानन्दः किं पलायनसूत्रं पठितवान् ? अथवा प्राणरक्षणाय सः वृक्षम् आरोहत् ? न । सः शान्ततया निश्चलतया च तत्रैव उपाविशत् - 'अहं यदि एतस्य आमिषत्वं प्राप्नुयां तर्हि तत् मम परमं सौभाग्यम् एव' इति चिन्तयन् । अन्तिमः क्षणः आसन्नः इति भावयन् सः देवध्यानम् अकरोत् ।



सः क्रूरः व्याघ्रः सकृत् तीक्ष्णदृष्ट्या तम् अपश्यत्, मन्दं ततः निरगच्छत् च । अनन्तरम् अपि विवेकानन्दः ततः न उत्थितः । तेन चिन्तितं यत् अचिरात् एव खादनेच्छां प्राप्य सः व्याघ्रः सपरिवारं पुनः अपि आगच्छेत् इति । किन्तु तस्य चिन्तनस्य अनुगुणं व्याघ्रः तु पुनः न आगतः एव ।

आर्योक्तिः वदति यत् यदि अस्मासु भीतिः न भवति तर्हि भीतेः कारणानि स्वयम् एव अपगच्छन्ति इति ।

# THE ADVENTURES OF G-man

# एंड्रोमेनिया

## अल्टीमेटम भाग 1




प्रस्तुतकर्ता POWER SUPPLY



Visit: www.parleproducts.com











टैरोलीन के शैतानी दिमाग़ में क्या चल रही है ख़तरनाक प्लानिंग? क्या वो जी-मैन और उसके दोस्तों का मुकाबला कर पाएगा? क्या वे मिलकर धरती को बचा पाएंगे? जी-मैन की क्या होगी अगली चाल? जानने के लिए पढ़िए एंड्रोमेनिया का अंतिम अंक.

# समरनृत्योत्सवः

कलिङ्गयुद्धं भारतीयाः सर्वेऽपि स्मरेयुः एव । तस्मिन् ऐतिहासिके युद्धे सम्राट् अशोकः जयं प्राप्य अपि न सन्तुष्टः । युद्धकारणतः जाता प्राणादिहानिः तस्मिन् निर्वेदम् अजनयत् । सः अवगतवान् यत् धर्ममार्गेण एव जनानां हृदयं जेतव्यं, न तु युद्धानां द्वारा देशाः इति । बुद्धतत्त्वस्य साक्षात्कारः प्राप्तः आसीत् तेन ।

अशोकस्य जीवने प्रवृत्तायाः एतस्याः घटनायाः संस्मरणार्थं **कलिङ्गमहोत्सव** नाम्ना समरनृत्योत्सवः आचर्यते प्रतिवर्षम् । धौलीनामके प्रदेशे एषः उत्सवः प्रचलति, यत्र च युद्धं प्रवृत्तम् आसीत् पूर्वम् । अत्र ३० वर्षेभ्यः पूर्वं नवमशतकीयस्य बौद्धविहारस्य पार्श्वे विश्वशान्तिस्तूपः निर्मितः । उत्सवस्य पृष्ठभूमिकायाम् एषः स्तूपः, बुद्धस्य प्रतिमा च अर्थपूर्णतया विराजते ।



दिनद्वयात्मकः एषः समरनृत्योत्सवः देशस्य विविधानां समरनृत्यपटूनां चित्तम् आकर्षति । केरलस्य *कलरिपट्ट*, मणिपुरीयः *थङ्ग् टा*, ओरिस्सीयं *च्चाव् पैका* च इत्यादयः समरनृत्यप्रकाराः अत्र प्रदर्श्यन्ते । 'यद्यपि एतानि नृत्यानि युद्धप्रधानानि, तथापि एतानि कलात्मकानि शान्तिसन्देशज्ञापकानि च' इत्येतम् अंशं ज्ञापयन्ति ते ।

एतस्मिन् वर्षे महोत्सवोऽयं फेब्रवरीमासस्य चतुर्थपञ्चमदिनाङ्कयोः प्रचलिष्यति । तस्यैव मासस्य अन्तिमे भागे भुवनेश्वरे **राजस्थानीयः उत्सवः** प्रचलिष्यति, यत्र च वेणुवादनादयः सङ्गीतप्रकाराः प्रस्तोष्यन्ते । एकादशे शतके निर्मितस्य राजस्थानमन्दिरस्य प्राङ्गणे एषः उत्सवः प्रचलति इत्यतः एतत् नाम तस्य उत्सवस्य । एतस्मिन् उत्सवे भागग्रहणं महते सौभाग्याय इति मन्यन्ते समग्रस्य देशस्य सङ्गीतज्ञाः अपि ।

पूर्वोक्तौ उभौ अपि उत्सवौ ओरिस्सीयया प्रवासोद्यमसंस्थया आयोज्येते ।

फेब्रवरीमासे एव राजस्थाने मरुभूम्युत्सवः, आन्ध्रप्रदेशे दक्षिणोत्सवः, मध्यप्रदेशे खुजराहूत्सवः इत्यादयः अपि प्रचलिष्यन्ति ।

# वाचकानां कृते कथास्पर्धा

## चिता कथापूर्तिः अर्हति रू. २५०/- पारितोषिकत्वेन

**अधस्तनकथा पठ्यताम् -**

विदूषकः यदा विनोदप्रसङ्गं श्रावयति तदा राजा हासं निरोद्धुं न शक्नोति स्म । राज्ञः मनसि भावः आसीत् यत् मया कदाचित् वा एतस्य उपहासः करणीयः इति । किन्तु तत् सरलं न आसीत् । विदूषकः राज्ञे तादृशम् अवसरम् एव न प्रयच्छति स्म ।



अथ कदाचित् राजा सपरिवारं विहाराय प्रस्थितवान् । मध्येमार्गम् अभिमुखम् आगच्छन्तम् अश्वारूढं विदूषकम् अपश्यत् सः । राजानं दृष्ट्वा विदूषकः विनयेन नमस्कृतवान् ।

राजा अचिन्तयत् यत् विदूषकम् उपहासपात्रं कर्तुम् अयं सुसमयः इति । अतः सः अपृच्छत् - ''विदूषकवर्य ! भवतः अश्वः बलवान् दृढकायः च अस्ति । विडम्बनं नाम तदुपरि उपविष्टः भवान् नितरां कृशः दुर्बलः च'' इति ।

विदूषकः कीदृशम् उत्तरं दत्तवान् स्यात् ? राजा किं तम् उपहासपात्रं कर्तुं शक्तवान्, उत राजा एव अपमानं प्राप्तवान् स्यात् ?

१०० - १५० शब्दैः एतां कथां प्रपूर्य योग्यं शीर्षकं दत्त्वा पिहितपत्रस्य उपरि **'Story contest'** इति लिखित्वा सा अधस्तनेन प्रवेशपत्रेण सह प्रेष्यताम् ।

**(सूचना - कथास्पर्धायाः अन्तिमा कथा एषा - *सम्पादकः*)**

**अन्तिमः दिनाङ्कः - ३१, जनवरी - २००६**

नाम ---------------------- वयः --------- जन्मदिनाङ्कः ------------

विद्यालयः ------------------------------------ कक्ष्या ------------

गृहसङ्केतः ----------------------------------------------------

----------------------------------------------------------------

---------------------------------------Pincode --------------------

पोषकस्य हस्ताक्षरम् भागग्रहीतुः हस्ताक्षरम्

**CHANDAMAMA INDIA LIMITED**

82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097

वाचकानां कृते कथास्पर्धा - परिणामः (मे - ०५)

# त्यागस्य अभ्यासः

भूस्वामी अपृच्छत् - ''मया किमर्थम् अधिकं धनं दातव्यम् ?'' इति ।

अर्चकः अवदत् - ''कारणद्वयेन'' इति ।

भूस्वामी आश्चर्येण अपृच्छत् - ''किं तत् कारणद्वयम् ?'' इति ।

अर्चकः अवदत् - ''भवान् धनिकः धर्मनिष्ठः च इति सर्वे जानन्ति । अद्य भवान् भक्तानां पङ्क्तौ अग्रे अस्ति । सर्वे अपि जनाः कुतूहलिनः सन्ति यत् भूस्वामिना भवता जीवने ऐदम्प्राथम्येन यत् दानं कृतं तत् कीदृशं स्यात् इति ज्ञातव्यम् इति । यदि भवतः कृपणता तैः ज्ञायेत तर्हि सा वार्ता दवानलः इव सर्वत्र प्रसरेत् । अपख्यातिः मरणसमाना भवति । एतत् तु प्रथमं कारणम्'' इति ।



''अपरं कारणं किम् ?'' इति अपृच्छत् भूस्वामी ।

''मरणसमये भवतः पीडा कियती स्यात् इति भगवान् मह्यं दर्शयन् अस्ति'' इति अवदत् अर्चकः ।

''तत् कथम् ?'' आश्चर्येण अपृच्छत् भूस्वामी ।

अर्चकः पुनः अवदत् - ''यः दशपैसात्मकस्य धनस्य त्यागात् अपि एतावत् कष्टम् अनुभवति सः भवान् मरणसमये समस्तस्य ऐश्वर्यस्य त्यागे, न जाने, कियत् कष्टम् अनुभविष्यति इति । सम्पत्तिः, भवनम्, आपणाः, बान्धवाः, शरीरम् इत्यादीनां त्यागः तु करणीयः एव । तदर्थम् अभ्यासः कदा क्रियते भवता ? धनं यत् समर्प्यते तत्र भगवान् धनस्य परिमाणं न पश्यति, प्रत्युत त्यागस्य अभ्यासं पश्यति । त्यागात् वैराग्यं, ततः भक्तिः, ततश्च भगवतः प्राप्तिः'' इति ।

एतस्य श्रवणात् धनिकस्य हृदयं परिवृत्तं जातम् । सः आत्मना धृतानि आभरणानि भगवते अर्पितवान् पूर्णेन मनसा भक्त्या च । ज्ञानोदयात् जाता कान्तिः तस्य मुखे विलसति स्म ।

**कृष्णकुमारपालः**, रवीन्द्रबालभारती

जवाहरप्रसादपालः, पाल इ.एन्.टि.हास्पिटल

नासौल, **हरियाणा - १२० ००१**

# वार्ताविशेषः

## तीर्थग्रामः कश्चन




गुजरातराज्ये आनन्दनामके जनपदे स्थिते पेट्लीग्रामे रक्षणव्यवस्था कापि नास्ति । रात्रिमात्रे द्वारं कील्यते तत्र । तथापि गतेषु २५ वर्षेषु एकमपि चौर्यप्रकरणं न प्रवृत्तं तत्र । तदवधौ कोऽपि आरोपः आरक्षकालये न उल्लिखितः, न्यायालये च न कोऽपि अभियोगः पञ्जीकृतः । पूर्वं कदाचित् चतुर्णां वृक्षाणां विषये प्रतिवेशिनोः विवादः जातः । तदा ग्रामप्रमुखैः घण्टाद्वयाभ्यन्तरे विवादः परिहृतः । उभौ वृक्षौ एकस्मै प्रदत्तः, अपरस्मै एकः वृक्षः । चतुर्थे वृक्षे उभयोः अपि उपयोगाधि-कारः इति निर्णीतम् । ग्रामे अस्पृश्यता सर्वथा नास्ति । ग्रामस्थेभ्यः २० कूपेभ्यः यः कोऽपि यदाकदाचिदपि जलम् उद्धर्तुम् अर्हति । ग्रामस्थेषु त्रिषु मन्दिरेषु सर्वेषां निर्बाधः प्रवेशः । अतः एव राज्यसर्वकारेण एषः 'तीर्थग्राम'त्वेन परिगणितः अस्ति ।

## कालिदासमन्दिरम्



संस्कृतकविः कालिदासः श्रेष्ठः कविः, कविकुलगुरुः च । पञ्चमे शतके उज्जयिनीं शासितवतः विक्रमादित्यस्य आस्थाने स्थितेषु नवसु रत्नेषु अन्यतमः सः । तस्य स्मरणाय ओरिस्साराज्ये केन्द्रपाडाजनपदे बाबकरपुरग्रामे मन्दिरम् एकं निर्मितम् अस्ति । बलरामभास्कररायनामकः कश्चन भूस्वामी १८०२ तमे वर्षे एतत् मन्दिरं निर्मापितवान् । सः भूस्वामी स्वयं संस्कृतज्ञः आसीत् । ग्रामजनाः, समीपग्रामस्थाः च कालिदासस्य मूर्तिं भक्त्या पूजयन्ति । अन्यदेवानां मन्दिरेषु इव अत्रापि सर्वे आचाराः प्रचलन्ति । तच्च मन्दिरं श्रीकविकालिदासमन्दिरत्वेन ख्यातम् अस्ति ।



# गर्वस्य फलम्

काशीराज्यं ब्रह्मदत्तः यदा परिपालयति स्म तदा गुत्सकः नाम वणिक् सन् जन्म प्राप्तवान् आसीत् बोधिसत्त्वः । शोडशे एव वयसि सः असदृशवैणिकरूपेण ख्यातिं प्राप्तवान् । जम्बूद्वीपे एव तत्सदृशः वैणिकः न आसीत् । काशीराजः तम् आस्थानवैणिकरूपेण नियुक्तवान् ।

कदाचित् काशीराज्यीयाः केचन वणिजः वाणिज्यार्थम् उज्जयिनीं गतवन्तः । गुत्सकस्य कारणतः काशीराज्ये प्रायः सर्वे वीणायाम् अभिरुचिमन्तः जाताः आसन् ।

काशीवणिजः उज्जयिनीस्थान् वणिजः अवदन् - ''वयं वीणावादनं श्रोतुम् इच्छामः । एतस्य नगरस्य श्रेष्ठान् वैणिकान् निमन्त्र्य वीणावादनं व्यवस्थापयन्तु भवन्तः । एतस्य निमित्तं यः व्ययः भवेत् तं वयं वक्ष्यामः'' इति ।

उज्जयिन्यां स्थितेषु वैणिकेषु मूर्तेशः सुप्रसिद्धः आसीत् । अतः काशीवणिजां मनोरञ्जनार्थं तस्य वाद्यगोष्ठी आयोजिता उज्जयिनीवणिग्भिः ।

मूर्तेशः वीणां स्वीकृत्य वणिजाम् आवासं गतवान् । वीणायाः तन्त्रीः समीकृत्य सः झङ्कारं कृतवान् । दीर्घकालं यावत् तेन वीणावादनं कृतम् । तथापि काशीवणिजां मुखे तु अल्पः अपि सन्तोषः न दृष्टः ।

ततः तेन कानिचन गीतानि श्रावितानि । तथापि काशीवणिजां मुखे तु सन्तुष्टिरेखा अपि न उत्पन्ना ।

अन्ते मूर्तेशः विषादेन तान् उक्तवान् - ''महाशयाः ! मया आ बहोः कालात् वीणावादनं कृतम् । तथापि भवतां मुखे तोषस्य रेखा अपि न दृष्टा । किं मम वीणावादनं भवद्भ्यः न अरोचत ?'' इति ।

एतत् श्रुत्वा काशीवणिजः परस्परं मुखं दृष्टवन्तः । ततः कश्चित् वणिक् उत्थाय



अवदत् – ''एतावत्पर्यन्तं किं भवान् वीणां वादयन् आसीत् ? अहो, आश्चर्याय एतत् । वयं तु चिन्तितवन्तः आस्म यत् भवान् श्रुतिं समीकुर्वन् स्यात् इति'' इति ।

ततः अपरः उत्थाय अवदत् – ''वयं चिन्तितवन्तः आस्म यत् वीणा सम्यक् नास्तीत्यतः भवान् तां पुनः पुनः परीक्षमाणः अस्ति इति । कृपया भवता क्षन्तव्याः वयम्'' इति ।

एतत् श्रुतवतः मूर्तेशस्य मुखं विच्छायं जातम् । सः विषादेन अवदत् – ''इतः पूर्वं भवद्भिः कस्यचित् महावैणिकस्य वीणावादनं श्रुतं स्यात् । अतः भवद्भ्यः मम वीणावादनं न आरोचत । कृपया तस्य महावैणिकस्य नाम उच्यताम्'' इति ।

''किं भवता काशीराज्यस्य आस्थान-वैणिकस्य गुत्सकस्य नाम न श्रुतम् ?'' इति अपृच्छन् वणिजः ।

''किं सः महावैणिकः ?'' – मूर्तेशः अपृच्छत् ।

''तस्य कौशलस्य पुरतः भवतः वीणा-वादनं तु बालिशचेष्टा एव'' इति अवदन् वणिजः ।

''गुत्सकसदृशः वैणिकः यावत् अहं न भवामि तावत् नास्ति मम चित्तशान्तिः विश्रान्तिः वा । एतदवसरे भवद्भिः मह्यं किमपि दातव्यं नास्ति'' इति उक्त्वा मूर्तेशः ततः निर्गतवान् ।

तस्मिन् एव दिने सः गृहात् प्रस्थाय अचिरात् एव काशीनगरं प्राप्य बोधिसत्त्वस्य गृहं गतवान् ।

बोधिसत्त्वः तम् अपृच्छत् – ''वत्स ! कः भवान् ? किमर्थम् अत्र आगतं भवता ?'' इति ।

''श्रीमन् ! अहमस्मि उज्जयिन्याः निवासी । मम नाम मूर्तेशः इति । भवत्तः वीणावादनम् अध्येतव्यम् इति उद्देशेन मया अत्र आगतम् । यदि भवतः अनुग्रहः स्यात् तर्हि कालान्तरे भवत्सदृशत्वं प्राप्तव्यम् इति मम इच्छा'' इति । अवदत् मूर्तेशः ।

बोधिसत्त्वः मूर्तेशं वीणावादनस्य बोधनं सहर्षम् अङ्गीकृतवान् ।

मूर्तेशः प्रतिदिनं बोधिसत्त्वस्य गृहे वीणायाः अभ्यासं करोति स्म, तेन सह आस्थानं गच्छति स्म अपि ।

कानिचन वर्षाणि अतीतानि ।

कदाचित् बोधिसत्त्वः मूर्तेशम् अवदत् –

''वत्स ! मया यद्यत् ज्ञायते तत्सर्वं बोधितं मया । अतः इतः परं भवान् स्वगृहं गन्तुम् अर्हति'' इति ।

किन्तु मूर्तेशः उज्जयिनीं प्रति गमनं न इच्छति स्म । तत्र मम विद्यायाः आदरः न्यूनः इति चिन्तयति स्म सः ।

'उज्जयिन्यां तु अतिसामान्यकौशलवान् अपि अहं महाकलाकारत्वेन परिगण्यमानः आसम् । अतः किं तत्र स्थित्या ? कथमपि यदि काश्याम् एव मया आस्थाने पदं प्राप्येत तर्हि मम गौरवं वर्धेत । इदानीं मम पाण्डित्यं तु बोधिसत्त्वस्य पाण्डित्येन समम् अस्ति एव । बोधिसत्त्वः तु इदानीं महावृद्धः जातः अस्ति अपि । अतः काशीराज्यस्य आस्थाने स्थान-प्राप्तिः मम क्लेशाय न स्यात्' इति अचिन्तयत् सः ।

ततः सः कदाचित् बोधिसत्त्वम् अवदत् - ''श्रीमन् ! अहम् उज्जयिनीं प्रतिगन्तुं न इच्छामि । अहं भवत्तुल्यः अस्मि इति यदि भवान् भावयति तर्हि राजास्थाने मह्यं स्थानं दापयतु कृपया'' इति ।

अनन्तरदिने बोधिसत्त्वः राजानम् एतम् अंशम् अवदत् ।

तदा राजा क्षणकालं विचिन्त्य अवदत् - ''मूर्तेशः आ बहोः कालतः भवतः शिष्यः अस्ति । अतः तम् अहम् अवश्यं आस्थान-पण्डितत्वेन नियोक्ष्यामि । किन्तु भवते यावत् वेतनं दीयते तस्य अर्धभागः एव तस्मै दास्यते मया । यदि एतत् सम्मत्तं स्यात् तर्हि श्वः एव सः मम आस्थानपण्डितपदं भूषयतु नाम'' इति ।

बोधिसत्त्वस्य मुखात् एतत् श्रुत्वा मूर्तेशः ईर्ष्याग्रस्तः जातः । सः अचिन्तयत् - 'अहं बोधिसत्त्वेन तुल्यः अस्मि एव । तथापि वेतने न्यूनता किमर्थम् ?' इति ।

ततः सः तद्दिने एव राजानं दृष्ट्वा अवदत् -



''महाराज ! अल्पेन वेतनेन भवता राजास्थाने मम नियुक्तिः अनुमता इति मया श्रुतम् । पाण्डित्येन अहं गुरुवर्यस्य समानः एव अस्मि । एवं स्थिते अपि वेतने न्यूनता किमर्थम् ?'' इति ।

तदा राजा अवदत् - ''अहं तु गुत्सकस्य शिष्यत्वेन एव भवन्तम् अभिजानामि, न तु तत्तुल्यवैणिकरूपेण । गुरुशिष्ययोः पाण्डित्ये तारतम्यं स्यादेव'' इति ।

''मम सामर्थ्यं परीक्षया ज्ञायताम्'' इति अवदत् मूर्तेशः ।

''भवतु नाम । भवतोः उभयोः अपि स्पर्धाम् आयोजयिष्यामि । तत्र यदि भवता गुत्सकतुल्यता प्रमाणीकरिष्यते तर्हि अधिकं वेतनं दास्यामि । यदि तथा कर्तुं न शक्तं तर्हि मम आस्थानं प्रवेष्टुं सर्वथा न भविष्यति भवतः अधिकारः । किम् एतत् अनुमन्यते भवता ?'' इति अपृच्छत् राजा । मूर्तेशः एतत् अङ्गी-कृतवान् ।

ततः गुरुशिष्ययोः स्पर्धा आयोजिता जाता । उभौ अपि स्वप्रतिभायाः प्रदर्शनाय प्रयासम् आरब्धवन्तौ । एतदभ्यन्तरे बोधिसत्त्वस्य वीणायाः एका तन्त्रीः विच्छिन्ना । तथापि तस्य वीणावादनं तु अक्षुण्णम् एव अनुवृत्तम् ।

एतत् दृष्ट्वा मूर्तेशः स्वस्य वीणायाः एकां तन्त्रीं स्वयं त्रोटयित्वा वीणाम् अवादयत् ।

किञ्चित्कालानन्तरं बोधिसत्त्वस्य वीणायाः अपरा तन्त्रीः अपि छिन्ना । मूर्तेशः अपि स्वस्य वीणायाः अपरां तन्त्रीं बलात् एव अच्छेदयत् ।

किञ्चित्कालाभ्यन्तरे गुत्सकस्य वीणायाः सर्वाः अपि तन्त्र्यः विच्छिन्नाः जाताः । मूर्तेशः अपि स्वस्य वीणायाः सर्वाः तन्त्रीः बलात् अच्छेदयत् ।

गुत्सकः तु छिन्नाभ्यः तन्त्रीभ्यः अपि स्वरम् उत्पादयति स्म । किन्तु मूर्तेशः तथा कर्तुं न शक्तवान् ।

एतत् दृष्टवन्तः जनाः गुत्सकस्य प्रशंसां बहुधा कृतवन्तः, मूर्तेशस्य च उपहासम् अकुर्वन् ते ।

मूर्तेशः एतम् अपमानं सोढुं न शक्तवान् । सः झटिति उत्थाय आस्थानात् निर्गतवान्, तस्मिन् एव दिने उज्जयिनीं प्रतिगतवान् च ।







# रामायणम्

महामुनेः वाल्मीकेः आश्रमः तमसानदीतीरे आसीत् । कदाचित् नारदः तम् आश्रमम् आगतवान् ।

वाल्मीकिः शास्त्रोक्तेन क्रमेण स्वागतीकृत्य अपृच्छत् – ''महात्मन् ! एतस्मिन् युगे सकलसद्गुणसम्पन्नः महापराक्रमी कोऽपि पुरुषः किम् अस्ति ?'' इति ।

तदा नारदः श्रीरामस्य कथां विस्तरेण श्रावितवान् । नारदः यावत् ततः निर्गतः तावता स्नानसमयः आसन्नः आसीत् । अतः वाल्मीकिः शिष्येण भारद्वाजेन सह स्नानार्थं तमसानदीतीरं प्रति प्रस्थितवान् ।

एवं गमनसमये ताभ्यां किञ्चन क्रौञ्चमिथुनं दृष्टम् । तौ क्रौञ्चपक्षिणौ आनन्देन उत्साहेन च व्यवहरन्तौ आस्ताम् । तावता केनचित् निषादेन प्रयुक्तः बाणः क्रौञ्चपक्षिणम् अमारयत् । भूमौ पतितः क्रौञ्चः प्राणैः वियुक्तः जातः । तस्मात् क्रौञ्ची विलपनम् आरब्धवती । एतत् दृष्टवतः वाल्मीकेः हृदये करुणा उत्पन्ना । व्याधस्य विषये च क्रोधः समुत्पन्नः । तस्य मुखात् अप्रयत्नेन कश्चन श्लोकः निर्गतः –

*मा निषाद प्रतिष्ठां त्वम्*
*अगमः शाश्वतीः समाः ।*
*यत् क्रौञ्चमिथुनादेकम्*
*अवधीः काममोहितम्* इति ।

एतस्मात् वाल्मीकिः स्वयम् आश्चर्यान्वितः जातः । आश्रमं प्रति गमनस्य अनन्तरम् अपि सः एव श्लोकः तस्य मनसि पुनः पुनः गुञ्जति स्म ।




एतावता ब्रह्मा तत्र प्रत्यक्षः जातः । तदा वाल्मीकिः तं स्वागतीकृत्य साष्टाङ्गं नमस्कृतवान् । तदा ब्रह्मा – ''मुनिवर्य ! मम अनुग्रहस्य कारणतः एव भवतः मुखात् श्लोकः निर्गतः । भवता रामस्य कथा तु श्रुता एव । तां कथाम् अवलम्ब्य महाकाव्यं किञ्चन रच्यताम् । यावत् पृथिवी स्थास्यति तावत् तत् काव्यम् अपि तिष्ठतु । यावत् तत् स्थास्यति तावत् भवतः नाम कीर्तिः चापि जनानां रसनासु विलसिष्यति'' इति उक्त्वा ततः अन्तर्हितः जातः ।

ब्रह्मणः एतया प्रेरणया वाल्मीकिः रामायणं रचितवान् । तस्य पठनात् सर्वेऽपि अमन्दम् आनन्दम् अवाप्नुवन् ।

वैवस्वतः सूर्यस्य पुत्रः । इक्ष्वाकुः वैवस्वतस्य पुत्रः । वैवस्वतः सप्तममनुत्वेन शाश्वतख्यातिं प्राप्तवान् । अतः एव इक्ष्वाकुवंशीयाः सर्वे राजानः सूर्यवंशीयत्वेन ख्याताः जाताः ।

सूर्यवंशीयेषु सगरः अपि अन्यतमः । स्वर्गतः गङ्गां भूलोकम् आनीतवान् भगीरथः सगरस्य पौत्रः । सूर्यवंशीयाः राजानः अयोध्यां राजधानीं परिकल्प्य कोसलदेशं पालितवन्तः । वैवस्वतः मनुः स्वयं कोसलदेशं पालितवान् ।

शत्रुभिः भेत्तुम् अशक्याम् अयोध्यां राजधानीं कृत्वा राजा दशरथः अपि कोसलदेशं पालितवान् । सः ऐश्वर्येण कुबेरसमानः, पराक्रमेण इन्द्रतुल्यः च आसीत् ।

दृष्टिः, जयन्तः, जयः, सिद्धार्थः अर्थसाधकः, अशोकः, मन्त्रपालः, सुमन्त्रः चेति अष्टौ मन्त्रिणः दशरथस्य । महामुनिः वसिष्ठः तस्य कुलगुरुः । वसिष्ठवामदेवौ तस्य पुरोहितौ । देशस्य कस्मिन् कोणे किं प्रवर्तते इति सः गुप्तचराणां द्वारा ज्ञातुं प्रभवति स्म । मन्त्रिणां साहाय्येन सः न्याय्येन मार्गेण राज्यं पालयति स्म । तस्य शासनकाले प्रजाः सुखेन आसन् । देशे कोऽपि अन्याय्यं न आचरति स्म । सर्ववर्णीयाः अपि स्वीयं धर्मं श्रद्धया पालयन्ति स्म । अतः राज्ये दैन्यदुःखादयः न आसन् ।

दशरथः सर्वविधतया अपि सन्तुष्टः आसीत् । तस्य एकमेव दुःखं नाम अनपत्यता । एतत् दुःखं तं बहुधा पीडयति स्म । कदाचित् सः अचिन्तयत् यत् अश्वमेधयागं कृत्वा देवताः सन्तोषिताः चेत् मया सन्तानः प्राप्येत इति । अतः सः सुमन्त्रादीन् मन्त्रिणः, वसिष्ठ-वामदेव-सुयज्ञ-जाबालिप्रभृतीन् ऋषिवरान्,

प्राज्ञान् ब्राह्मणान् च मेलयित्वा तेषां मार्गदर्शनम् अयाचत् । सर्वे अश्वमेधयागप्रस्तावं सहर्षम् अङ्गीकृतवन्तः ।

सर्वेषां निर्गमनस्य अनन्तरं मन्त्री सुमन्त्रः अवदत् – ''महाराज ! भवता अश्वमेधयागाचरणं यत् चिन्तितं तत् युक्तम् एव । एतं यागं निर्विघ्नतया निर्वर्तयितुं महामहिमवतः ऋष्यशृङ्गस्य एकस्यैव सामर्थ्यम् अस्ति इति चिन्तयामि अहम् । ऋष्यशृङ्गवृत्तान्तः श्रवणरमणीयः अस्ति । तं सङ्ग्रहेण शृणोतु तावत् –

अङ्गदेशस्य राजा रोमपादः भवतः सुहृत् एव । कदाचित् तस्मिन् देशे महान् क्षामः समुत्पन्नः । क्षामनिवारणं कथम् इति अजानन् रोमपादः नितरां चिन्ताक्रान्तः जातः । प्राज्ञान् आहूय सः क्षामनिवारणोपायम् अपृच्छत् ।

प्राज्ञाः अवदन् – ''महाराज ! ऋष्यशृङ्गः विभाण्डकमुनेः पुत्रः । सः यत्र गच्छति तत्र सुभिक्षं भविष्यति । तस्मै पुत्रीं शान्तां दत्त्वा विवाहः निर्वर्त्यताम् । सः स्थिरतया यदि अङ्गदेशे एव निवसेत् तर्हि अत्र क्षामः न भवेत् । सुभिक्षं च सिद्ध्येत्'' इति ।

राजा रोमपादः पुरोहितान् मन्त्रिणः च आहूय आदिशत् – ''भवन्तः गत्वा ऋष्यशृङ्गम् अत्र आनयन्तु'' इति ।

एतत् श्रुत्वा मन्त्रिणः पुरोहिताः च नितरां भीताः । ऋष्यशृङ्गः पुनः पुनः निवेदनेनापि तपस्यां परित्यज्य अरण्यतः न आगमिष्यति इति ते जानन्ति स्म । यदि अनुरोधः क्रियेत तर्हि शापं दद्यात् सः इति भीताः आसन् ते । तस्य आनयनाय मायामयः उपायः एव आश्रयणीयः इति विचिन्त्य ते अवदन् –



''महाराज ! आ बाल्यात् अरण्ये एव वसन् ऋष्यशृङ्गः वेदाध्ययनं कृतवान् । इदानीं तु अरण्ये एव तपसि लीनः सः । प्राकृतिकसौन्दर्यस्य वीक्षणे महती आसक्तिः तस्य । पशुपक्षिणां तरुलतादीनां निसर्गस्य च दर्शनाय क्रोशं यावत् अपि सः गच्छति कदाचित् । कौटुम्बिकेषु विषयेषु सर्वथा अनासक्तः सः । स्त्रियः अद्यापि तेन न दृष्टाः । यदि वयं काश्चन नर्तकीः अरण्यं प्रति प्रेषयेम तर्हि ताः उपायेन तस्य मनः आकृष्य अत्र आनेतुम् अर्हेयुः'' इति ।

रोमपादः एतं प्रस्तावम् अङ्गीकृतवान् । सम्यक् विभूषिताः काश्चन नर्तक्यः ऋष्यशृङ्गस्य आश्रमं प्रति प्रेषिताः । ऋष्यशृङ्गः प्रायः आश्रमात् अन्यत्र न गच्छति स्म । एकदा सः केनचित् कारणेन आश्रमात्



किञ्चिद्दूरम् आगतवान् । नर्तक्यः गायन्त्यः नृत्यन्त्यः च तत्समीपम् आगताः । तासां नयनाभिरामं रूपं, मधुरं कण्ठम्, अपूर्वाणि आभरणानि च दृष्ट्वा ऋष्यशृङ्गः नितराम् आश्चर्ययुक्तः जातः । तस्य मनसि तासां विषये आसक्तिः अपि उत्पन्ना ।

''भवान् कः ? किमर्थम् अरण्ये अटन् अस्ति भवान् ?'' इति तम् अपृच्छन् नर्तक्यः ।

''अहं विभाण्डकमुनेः पुत्रः अस्मि । यदि भवत्यः मम आश्रमम् आगच्छेयुः तर्हि अहं यथोचितं सत्कुर्याम्'' इति प्रार्थनास्वरेण अवदत् ऋष्यशृङ्गः ।

ताः तेन सह आश्रमं गत्वा कन्दमूलफलानि खादितवत्यः । ततः ताः आत्मना आनीतानि भक्ष्याणि तस्मै दत्त्वा उक्तवत्यः – ''एतानि अपि फलानि एव । भवान् एतानि खादतु । वयं तपस्यायै गच्छामः तावत्'' इति वदन्त्यः ततः निर्गताः ।

ऋष्यशृङ्गः ताभिः दत्तानि भक्ष्याणि अभक्षयत् । तानि फलेभ्यः अपि अधिक-रुचिपूर्णानि आसन् । अनन्तरदिने अपि सः तासां दर्शनाय तत् स्थलं गतवान्, यत्र ताः पूर्वस्मिन् दिने दृष्टाः आसन् । तत्र ताः दृष्टाः तेन ।

ताः तम् अवदन् – ''महाशय ! भवान् अपि अस्माकम् आश्रमम् आगत्य आतिथ्यं यदि स्वीकुर्यात् तर्हि वयं सन्तुष्टाः स्याम'' इति ।

ऋष्यशृङ्गः एतं प्रस्तावम् अङ्गीकुर्वन् ताभिः सह प्रस्थितवान् । ताः तम् अङ्गदेशम् आनीतवत्यः । सः यदा अङ्गदेशे पदं स्थापित-वान् तदा तत्र सुवृष्टिः जाता । रोमपादः तं स्वागतीकृतवान्, साष्टाङ्गं प्रणम्य एतेन क्रमेण यत् आनायितं तदर्थं क्षमाम् अयाचत्, पुत्रीं तस्मै दत्त्वा विवाहं निर्वर्तितवान् अपि । ऋष्य-शृङ्गः शान्तया सह अङ्गदेशे एव वासम् अकरोत् ।''

सुमन्त्रेण श्रावितां एतां कथां श्रुत्वा राजा दशरथः नितरां सन्तुष्टः । वसिष्ठमहामुनेः अनुज्ञां प्राप्य सः पत्नीभिः मन्त्रिभिः च सह अङ्गदेशं गतवान् । रोमपादः दशरथस्य भव्यं स्वागतं विहितवान् । ततः महता सन्तोषेण एव सः पुत्रीं जामातरं च अयोध्यां प्रति प्रेषित-वान् ।

अयोध्यां प्रति ऋष्यशृङ्गस्य आगमनस्य अनन्तरं कानिचन दिनानि अतीतानि । वसन्त-

ऋतुः उपस्थितः । दशरथः ऋष्यशृङ्गम् अवदत् – ''कृपया योग्ये मुहूर्ते यज्ञस्य आरम्भः भवतु । यज्ञस्य निर्विघ्नतया परिसमाप्तिः भवदधीनः'' इति ।



अश्वमेधयागाय महता वैभवेन सन्नाहाः आरब्धाः । यज्ञस्य निर्वर्तनाय वेदज्ञाः सुयज्ञ-वामदेव-काश्यपादयः निमन्त्रिताः । सरयूनद्याः उत्तरतटे यज्ञवेदिका निर्मिता ।

शुभे दिने शुभे मुहूर्ते दशरथः यज्ञशालां प्राविशत् । यज्ञः आरब्धः । आदौ दशरथेन इन्द्राय हविर्भागः अर्पितः । ततः यागकार्यम् अनुवृत्तम् ।

अश्वमेधयागः त्रिदिवसीयः । यागसमाप्तेः अनन्तरं दशरथेन ऋत्विग्भ्यः विशाला भूमिः प्रदत्ता । तदा ते अवदन् – ''महाराज ! भूमिं प्राप्य वयं किं वा कुर्याम ? यदि मणि-सुवर्णादयः गावः च दत्ताः स्युः तर्हि वयम् उपकृताः स्याम'' इति ।

एतत् अङ्गीकुर्वन् दशरथः तेभ्यः दशलक्षं गाः, प्रभूतं सुवर्णरजताभरणादिकं च दत्तवान् ।

ऋत्विजः एवं प्राप्तं सुवर्णादिकं वसिष्ठाय समर्पितवन्तः । अत्रान्तरे कश्चन निर्धनः ब्राह्मणः आगत्य दशरथस्य पुरतः हस्तं प्रासारयत् । दशरथः झटिति आत्मना धृतं सुवर्णकङ्कणं तस्मै प्रायच्छत् । सर्वे दशरथस्य दानशीलतां प्रशंसितवन्तः ।

अश्वमेधयागस्य समाप्तेः अनन्तरं मुनिः ऋष्यशृङ्गः दशरथेन पुत्रकामेष्टिम् अपि कारितवान् ।

कदाचित् देवाः सर्वे स्वीये स्थाने उपविष्टाः आसन् । ते ब्रह्माणं रावणस्य पीडां विस्तरेण अश्रावयन् ।

सर्वं श्रुत्वा ब्रह्मा अवदत् – ''दुष्टः रावणः वरं प्राप्तवान् अस्ति यत् देव-दानव-गन्धर्व-यक्षादिभ्यः मम मरणं न स्यात् इति । तस्य दृष्ट्या मानवाः अकिञ्चित्कराः । सः तान् अशक्तान् असहायान् च भावयति । ते मां पीडयितुं किं, धैर्येण द्रष्टुम् अपि नार्हन्ति इति सः अचिन्तयत् । मनुष्येभ्यः विपत्तिः सर्वथा असम्भवा इत्यतः सः तेभ्यः रक्षणं न अयाचत । अतः महाविष्णुः दशरथपुत्ररूपेण जन्म प्राप्स्यति । नररूपेण गत्वा रावणं संहरिष्यति'' इति । एतत् श्रुत्वा देवाः नितरां प्रसन्नाः जाताः ।

एतस्मिन् एव समये दशरथस्य यागशालायां यज्ञकुण्डे कश्चन दिव्याकारः प्रकटितः जातः ।



तस्य हस्ते कश्चन कलशः आसीत् । सः कलशः सुवर्णमयः आसीत् । रजतावरणेन आवृतः च आसीत् ।

सः दिव्यस्वरूपः दशरथम् अवदत् - ''राजन् ! देवाः पायसपूर्णम् एतं कलशं प्रेषितवन्तः । प्रजापतेः आज्ञया अहम् अत्र उपस्थितः । एतत् पायसं भवान् पत्नीभ्यः ददातु । तस्य पायसस्य सेवनात् ताः गर्भवत्यः भविष्यन्ति । पराक्रमशीलाः पुत्राः प्राप्स्यन्ते भवता'' इति ।

दशरथः महता आनन्देन तं कलशं स्वीकृतवान् । तस्मै दिव्यपुरुषाय प्रदक्षिणनमस्कारान् समर्पितवान् च ।

दशरथः पायसस्य अर्धभागं कौसल्यायै दत्तवान् । तस्य अर्धं सुमित्रायै दत्तं तेन । तस्य अर्धं कैकेय्यै सः दत्तवान् । यत् अवशिष्टं तत् सुमित्रायै पुनः दत्तम् । तिस्रः अपि गर्भवत्यः जाताः ।

महाविष्णुः मानवरूपेण अवतारं प्राप्तुं यदा सन्नाहं कुर्वन् आसीत् तदा देवाः ब्रह्मणः आज्ञायाः अनुगुणं कामरूपिणः वानरान् सृष्टवन्तः ।

देवेन्द्रतः वाली, सूर्यतः सुग्रीवः, कुबेरतः गन्धमादनः, अश्विनीदेवताभ्यां मैन्दद्विविदौ, विश्वकर्मतः नलः, वरुणतः सुषेणः, पर्जन्यतः शरभः, वायुतः हनूमान् च जन्म प्राप्तवन्तः । ते सर्वे वानराः बलशालिनः श्रेष्ठाः च आसन् । अन्येभ्यः देवेभ्यः सहस्रशः वानराः जन्म प्राप्तवन्तः । ते सर्वे ऋष्यमूकपर्वतसमीपे स्थिते पर्वते वासम् आरब्धवन्तः । वालिनं सुग्रीवं च राजत्वेन परिगणितवन्तः ते । नलनीलहनुमदादयः मन्त्रिणः जाताः ।

पुत्रकामेष्टेः समाप्तेः अनन्तरं द्वादशे मासे चैत्रशुक्लनवम्यां पुनर्वसुनक्षत्रयुक्ते दिने शुभे मुहूर्ते कौसल्या रामं प्रसूतवती । पुष्यनक्षत्रे कैकेयी भरताय जन्म दत्तवती । आश्लेषानक्षत्रे भरतशत्रुघ्नौ सुमित्रायाः गर्भतः जन्म प्राप्तवन्तौ ।

अयोध्यावासिनः आनन्दोत्सवम् आचरितवन्तः । मार्गे मार्गे गाननृत्यादयः प्रवृत्ताः । समग्रे राज्ये सन्तोषमयः परिसरः प्रसृतः । निर्धनेभ्यः वस्त्राभरणादीनि दत्तानि । मासं यावत् एषः आनन्दोत्सवः आचर्यमाणः दृश्यते स्म । न केवलं राजभवने, अपि तु गृहे गृहे राजकुमाराणां जन्मनः निमित्तम् उत्सवाः आचरिताः । दशरथः महता प्रमाणेन दान-

कार्यं निर्वर्तितवान् ।

चत्वारः बालकाः दिने दिने प्रवृद्धाः । यद्यपि रामलक्ष्मणौ समानोदरौ न आस्तां, तथापि तयोः मैत्री तु असदृशी आसीत् । एवमेव भरतशत्रुघ्नयोः मैत्री अपि प्रगाढा आसीत् । ते चत्वारः अपि सर्वाः विद्याः अधीतवन्तः । धनुर्विद्यायां सुनिपुणाः जाताः । यदा ते युवकाः जाताः तदा तेषां विवाहविषये राजा दशरथः मन्त्रिपुरोहितादिभिः सह समालोचनम् आरब्धवान् ।

कदाचित् राजा यदा चर्चायाम् आसीत् तदा द्वारपालकः आगत्य निवेदितवान् - ''महाराज ! कुशिकसुतः गाधिवंशीयः महामुनिः विश्वामित्रः भवद्दर्शनार्थम् उपस्थितः अस्ति । द्वारि भवदाज्ञां प्रतीक्षते'' इति ।

दशरथः झटिति पुरोहितैः सह निर्गत्य विश्वामित्रम् अर्घ्यपाद्यादिभिः सम्पूज्य सादरं स्वागतीकृतवान् ।

विश्वामित्रः अवदत् - ''राजन् ! भवतः देशे प्रजाः कुशलिन्यः खलु, शत्रुभयं किमपि नास्ति खलु ?'' इति । ततः सः वसिष्ठेन सह अपि सम्भाषणं कृत्वा राजभवनं प्रविश्य दशरथेन दर्शिते आसने उपाविशत् ।

''मुनिवर्य ! भवतः आगमनतः वयं धन्याः जाताः । कः आदेशः अस्मान् प्रतीक्षते ? कृपया सूच्यताम्'' इति अवदत् दशरथः ।

विश्वामित्रः प्रसन्नमुद्रया अवदत् - ''राजन् ! अहं याम् अपेक्षां प्रकटयामि तां पूरयन् भवान् स्वस्य सत्यनिष्ठतां प्रमाणीकरोतु । मया कश्चन यज्ञः आरब्धः । किन्तु उभौ राक्षसौ आगत्य यज्ञभूमौ मांसखण्डपातनेन सर्वम् अपवित्रं कृतवन्तौ । अतः तयोः निग्रहणाय भवता रामः मया सह प्रेषणीयः । सः सुबाहुमारीचनामकौ तौ यज्ञविघातकौ राक्षसौ निवारयतु'' इति ।



एतत् श्रुतवतः दशरथस्य हृदयं स्तब्धम् इव । भयदुःखातङ्कादयः उद्गताः । सिंहासनात् अवतीर्य सः कम्पमानेन स्वरेण अवदत् - ''मुनिवर्य ! रामः इतोऽपि बालकः । तस्य षोडश वर्षाणि अपि न अतीतानि । सः धनुर्विद्यामपि सम्यक् न जानाति । तादृशः दुर्बलः बालः राक्षसान् कथं सम्मुखीकर्तुम् अर्हेत् ? मत्समीपे अक्षौहिणीसेना एव अस्ति । अहं तया सेनया सह आगत्य युद्धं करिष्यामि । कृपया मया किं करणीयम् इति आदिश्यताम्''

इति ।

तदा विश्वामित्रः अवदत् - ''भवान् रावणनामकं राक्षसं जानीयात् एव । ब्रह्माणं तपसा सन्तोष्य अमोघाः शक्तीः सम्पादितवान् अस्ति सः । विश्रवसः पुत्रः सः कुबेरस्य अनुजः अपि । सः स्वयं यज्ञभङ्गम् अकुर्वन् बलशालिनौ सुबाहुमारीचौ तदर्थं प्रेषयति'' इति ।

''रावणस्य सम्मुखीकरणम् ! तत् तु मया अपि न शक्यते । एवं स्थिते बालः रामः किं वा कुर्यात् ?'' इति वदन् असहायकतां प्रकटितवान् दशरथः ।

एतत् श्रुतवतः विश्वामित्रस्य नेत्रे आरक्ते जाते । सः उत्थाय अकथयत् - ''महाराज ! किम् एषा एव भवतः सत्यनिष्ठा ? अपकीर्तिः किं प्राप्तुम् इष्यते ? कीदृशः एषः व्यवहारः भवतः !'' इति ।

तदा कुलगुरुः वसिष्ठः दशरथम् उद्दिश्य अवदत् - ''राजन् ! यत् न करणीयं तत् कुर्वन् अस्ति भवान् । सत्यनिष्ठताम् अप्रदर्शयन् भवान् इक्ष्वाकुकुलस्यैव कीर्तिं नाशयन् अस्ति । विश्वामित्रः सामान्यः इति किं भवता चिन्तितम् ? तेन अज्ञातम् अस्त्रं शस्त्रं च प्रायः नास्ति एव । राक्षसानां संहारं कर्तुम् अशक्नुवन् सः भवतः साहाय्यं याचितुम् अत्र आगतः इति किं भवता चिन्तितम् ? भवतः पुत्राणां हितं कल्पयितुम् एव सः आगतः । विश्वामित्रेण सह गमनात् एव भवतः पुत्राणां ज्ञानं पूर्णतां याति, भवता च कीर्तिः प्राप्यते । सर्वत्र तेषां कीर्तिः प्रसृता भविष्यति । भवतः पुत्राः सामान्याः मानवाः न । भविष्यति काले तैः बहूनि विशिष्टानि कार्याणि करणीयानि सन्ति । तस्य आधारं कल्पयितुम् इच्छन् विश्वामित्रः भवत्पुत्रान् नेतुम् अत्र आगतः अस्ति । अतः निश्चिन्ततया पुत्रान् प्रेषयितुम् अर्हति भवान् । यावत् तैः सह विश्वामित्रः स्थास्यति तावत् तेषां कोऽपि अपायः न भविष्यति'' इति ।

वसिष्ठस्य कथनात् दशरथेन किञ्चिदिव धैर्यं प्राप्तम् । सः रामलक्ष्मणौ विश्वामित्रस्य अधीनौ कृतवान् ।

रामलक्ष्मणौ विश्वामित्रम् अनुसृतवन्तौ । उभौ अपि धनुर्धारिणौ आस्ताम् । तयोः हस्ते खड्गः अपि आसीत् ।





# राजश्यालः

राजा महासेनः समग्रं भारतं जित्वा चक्रवर्ती जातः । ततः पराजयं प्राप्तवन्तः राजानः तस्य सामन्तत्वं प्राप्य तदीयान् आदेशान् पालयन्तः नियतरूपेण तस्मै शुल्कं यच्छन्ति स्म ।

साम्राज्यस्थापनाय महासेनः बहूनि युद्धानि कृतवान् । किन्तु तेन कदापि प्रजाः न पीडिताः । प्रजानां हिताय प्रतिदिनम् उपायं चिन्तयति स्म सः । नूतनाः योजनाः आरचय्य सामन्तानां द्वारा तासां क्रियान्वयनं कारयति स्म सः । अतः महासेनस्य साम्राज्ये सर्वाः प्रजाः सुखेन जीवन्ति स्म । किन्तु कोसलदेशे एव अन्यादृशी स्थितिः दृश्यते स्म ।

याः योजनाः इतरत्र सफलाः भवन्ति ताः एव कोसले किमर्थं विफलतां यान्ति इति महासेनः अवगन्तुं न शक्तवान् । अतः एतस्य कारणस्य ज्ञानार्थं सः बहुधा प्रयत्नं कृतवान् । किन्तु साफल्यं तु न प्राप्तम् ।

चक्रवर्तिनः आस्थाने कश्चन राजपुरोहितः आसीत् । तस्य बन्धुः गुणनिधिनामकः कश्चन सरलः जनः । सः सर्वान् रञ्जयति । महाराजः अपि विरामसमये तम् आनाय्य तस्य मुखात् हास्यप्रसङ्गान् श्रुत्वा मनोविनोदं प्राप्नोति स्म तदा तदा ।

गुणनिधिः महादेवभक्तः । सर्वाणि मन्दिराणि द्रष्टव्यानि, महत् पुण्यं च सम्पादनीयम् इति तस्य प्रबला इच्छा । सः श्रुतवान् आसीत् यत् कोसलदेशे प्रतिग्रामं देवालयः अस्ति, दुर्गमे अरण्ये अपि तत्र प्राचीनानि मन्दिराणि सन्ति इति । अतः तीर्थाटनाय सः कोसलदेशं प्रति गतवान् ।

तस्य यात्रा निर्विघ्नं प्रचलतु इति उद्देशेन राजपुरोहितः योग्यां व्यवस्थां कृतवान् । रथं, कांश्चन सहकारिणः चापि तस्मै सः दत्तवान् । कोसलदेशं गतः गुणनिधिः आदौ रामपुरनामकं ग्रामं गतवान् । तत्र भगवतः नटराजस्य



मन्दिरम् आसीत् ।

जनैः नटराजाय रमणीयं मन्दिरं निर्मितम् आसीत् । मन्दिरस्य दर्शनमात्रेण एव गुणनिधिः नितरां सन्तुष्टः । मूर्तेः दर्शनात् तस्य मुखात् अप्रयत्नेन एव स्वरः निर्गतः - 'हर हर महादेव' इति ।

अनन्तरक्षणे एव केचन भटाः आगत्य तं बाहौ गृहीतवन्तः ।

एतत् दृष्ट्वा गुणनिधिः आश्चर्यम् अनुभवन् - ''किमेतत् ? मया कः अपराधः कृतः ? किमर्थं मां पीडयन्तः सन्ति भवन्तः ?'' इति अपृच्छत् ।

''अत्र मन्दिरस्य अन्तः कोलाहलकरणं निषिद्धम् इति किं भवता न ज्ञायते ? आगच्छतु ग्रामप्रमुखसमीपम् । सः एव यथायोग्यं दण्डनं विधास्यति'' इति अवदन् भटाः ।

गुणनिधिः तान् निवेदितवान् यत् अहम् अत्रत्यं नियमं न जानामि स्म, अतः एतं मम प्रथमापराधं मत्वा भवन्तः मां मुञ्चन्तु कृपया इति ।

किन्तु भटाः एतत् न अङ्गीकृतवन्तः । 'ग्रामप्रमुखसमीपं गच्छाम अविलम्बेन' इति अवदन् ते । गुणनिधिः अनन्यगतिकतया एतत् अङ्गीकृतवान् ।

कश्चन युवकः एतत्सर्वं पश्यन् आसीत् । सः गुणनिधेः समीपम् आगत्य कर्णे अवदत् - ''किमर्थम् एतैः सह विवादः क्रियते ? एकैकस्मै एकैकं रूप्यकं ददातु । ते भवन्तं मुञ्चन्ति'' इति ।

गुणनिधिः तथैव कृतवान् । तदा भटाः तं मुक्त्वा ततः निर्गतवन्तः ।

तेषां भटानां निर्गमनस्य अनन्तरं गुणनिधिः युवकाय कृतज्ञतां समर्प्य अपृच्छत् - ''मन्दिरे भगवतः नाम्नः उच्चारणं कथम् अपराधाय भवेत् ?'' इति ।

तदा युवकः हसन् अवदत् - ''एतस्मिन् देशे किं युक्तं, किं च अयुक्तम् इति निर्णयाय न कोऽपि नियमः । कीदृशम् आचरणं कदा अपराधाय भवति इति वयम् अपि न जानीमः । यदा राजभटाः गृह्णन्ति तदा उत्कोचं दत्वा आत्मनः मोक्षः सम्पादनीयः इत्येतावत् एव वयं जानीमः । ग्रामप्रमुखस्य समीपं विषयः नीयते चेदपि न किमपि प्रयोजनम् । न्यायान्याय्यं न विचारयति सः'' इति ।

एतत् श्रुत्वा आश्चर्यम् अनुभवन् गुणनिधिः अपृच्छत् - ''किं ग्रामप्रमुखः अपि उत्कोचग्राही एव ? भवन्तः एतम् अंशं राजानं किमर्थं

न उक्तवन्तः ?'' इति ।

''किं प्रयोजनं भवेत् तेन ? स तु राज्ञः श्यालः खलु अस्ति ?'' इति अवदत् सः तरुणः ।

गुणनिधिः तं युवकम् अवदत् यत् अहं राजपुरोहितस्य बन्धुः अस्मि इति ।

तदा युवकः तम् अवदत् - ''एवं तर्हि भवान् ग्रामप्रमुखं स्वपरिचयादिकं सर्वं वदति चेत् प्रायः प्रयाणे भवतः किमपि प्रयोजनं सिद्ध्येत् अपि'' इति ।

गुणनिधिः ग्रामप्रमुखं स्वस्य परिचयम् अवदत् । तस्मात् तेन किमपि कष्टं न अनुभूतं तस्मिन् ग्रामे । अन्येषु अपि ग्रामेषु तेन एवमेव कृतम् । अतः तदीया तीर्थयात्रा निर्विघ्नं परिसमाप्ता ।



तीर्थयात्रापरिणामतः तेन अवगतं यत् रामपुर्याम् इव समग्रे कोसलदेशे अपि राजभटाः लघुनः विषयस्य निमित्तम् अपि सामान्यान् पीडयन्ति, ते प्राप्तस्य उत्कोचस्य कञ्चन भागम् अधिकारिणे यच्छन्ति अपि इति ।

किन्तु कोऽपि एतम् अंशं राजानं निवेदयितुं न इच्छति स्म । यतः सर्वे ग्रामप्रमुखाः राज्ञः श्यालाः एव आसन् ।

प्रतिग्रामं तेन समानं वचनं श्रुतम् - ''किं करवाम, अस्माकं ग्रामस्य प्रमुखः राज्ञः श्यालः अस्ति'' इति ।

गुणनिधिः तीर्थयात्रां समाप्य प्रत्यागतः अस्ति इति वार्तां श्रुत्वा राजा तं स्वसमीपम् आनायितवान्, यात्राविशेषान् अपृच्छत् च । गुणनिधिः सर्वान् विशेषान् राजानं निवेद्य अन्ते अवदत् - ''कोसलराजः रसिकतागुणेन प्रायः कृष्णम् अपि अतिशेते इति भाति । यतः प्रतिग्रामं तदीयाः श्यालाः सन्ति'' इति ।

एतत् श्रुत्वा हसन् राजा तम् अपृच्छत् - ''किं भवता तेषां राजश्यालानां गणना न कृता ?'' इति ।

''महाराज ! गणना कथं कर्तुं शक्येत ? प्रतिग्रामं राजश्यालः दृश्यते !! राजकार्यनिर्वाहकाः सर्वे तत्र राजश्यालाः एव'' इति अवदत् गुणनिधिः ।

एतत् श्रुत्वा राजा पुनरपि हसितवान् । गुणनिधिं विविधान् प्रश्नान् पृष्ट्वा सः अवगतवान् यत् सर्वं जनानां मुखात् श्रुतम् एव गुणनिधिः वदन् अस्ति इति । राजा जानाति स्म यत् कोसलराजस्य उभे एव पत्न्यौ इति । तयोः अन्यतरा महासेनस्य भगिनी एव । अतः

शतशः श्यालाः कोसलराजस्य भवितुं न अर्हन्ति इति सः अवगतवान् ।

गुणनिधेः निर्गमनस्य अनन्तरं राज्ञा चिन्तनं कृतम् - 'मया उत्तमाः योजनाः तु कृताः । किन्तु योजनायाः क्रियान्वयनं कुर्वताम् अधिकारिणां योग्यतायाः विषये अधिकम् अवधानं न दत्तम् । कोसलदेशे मम योजनाः विफलाः यत् तत्र कारणं प्रायः तत्रत्याः अधिकारिणः एव' इति ।

अनन्तरदिने एव सः कोसलदेशं प्रति गुप्तचरान् प्रेषितवान् । ते गुप्तचराः कोसलदेशे सर्वत्र अटित्वा विषयसङ्ग्रहं कृत्वा प्रत्यागत्य राजानं निवेदितवन्तः ।

ततः ज्ञातं तु एवम् - 'समग्रे कोसलदेशे राजोद्योगिनः सर्वे स्वच्छन्दं जनान् पीडयन्तः सन्ति । अधिकारस्य दुरुपयोगः तत्र सामान्यः विषयः । अधिकारिणां नियुक्तिः तत्र योग्यताम् अवलम्ब्य न क्रियते । कोसलदेशस्य सेनापतिः एव एतस्य प्रत्यक्षम् उदाहरणम् । सः खड्गग्रहणम् अपि सम्यक् न जानाति । शूरता तु नाम्ना एव । सः राज्ञः श्यालः । अतः एव योग्यतायाम् असत्याम् अपि यः राजोद्योगं प्राप्तवान् भवति सः सर्वोऽपि राजश्यालशब्देन निर्दिश्यते तत्र' इति ।

एतस्य सर्वस्य ज्ञानात् महासेने विवेकः उदितः । कोसलराजः आवुत्तः इत्यतः योजनानाम् असाफल्यस्य कारणानि यानि कोसलराजेन उक्तानि तेषु एव महासेनेन विश्वसितम् आसीत्, न तु प्रत्यक्षं परिशीलितम् आसीत् ।

'मम एतस्य व्यवहारलोपस्य कारणतः कोसलदेशे प्रजानां महती हानिः जाता । सा अचिरात् एव मया सम्यक् करणीया । शासनव्यवहारे राज्ञा सर्वं प्रत्यक्षम् अवगन्तव्यम् । अन्यस्य वचने विश्वासः न करणीयः' इति निश्चितं महासेनेन ।

तदनन्तरम् अचिरात् एव सः कोसलदेशे अयोग्यान् अधिकारिणः स्थानच्युतान् कृतवान् । अतः अग्रिमेषु द्वित्रेषु एव वर्षेषु कोसलदेशे अपि समृद्धिः दृष्टा । ततः राज्ञा यदा वेषान्तरं धृत्वा तत्र भ्रमणं कृतं तदा जनानां मुखात् श्रुतं यत् अस्माकं ग्रामप्रमुखः राजश्यालः नास्तीत्यतः वयम् इदानीं सुखेन स्मः इति ।



वीरसिंहवसन्तयोः युद्धे वसन्तः वीरसिंहस्य खड्गं पातयति । वसन्तः यावत् वीरसिंहं संहर्तुम् उद्युक्तः तावता जयानन्दः आगत्य तं निवारयति । सः तदीयान् अपराधान् ज्ञापयति । आत्मरक्षणाय प्रतीपतया पदानि स्थापयन् वीरसिंहः खाते पतति, मरणं प्राप्नोति च ।

# आर्यः

## अज्ञातराजकुमारस्य रहस्यम्

चित्रम् - गान्धि-अय्यः



निसर्गः एव खलनायकं यथायोग्यं दण्डयति । वसन्त ! भवान् सुखदेवसमीपं गत्वा वदतु यत् राजकुमारस्य स्वागताय राजभवनं गन्तव्यम् इति ।







जयानन्दः आर्यः च मन्दिरं प्राप्नुतः ।




आर्यः इतोऽपि ध्यानमग्नः अस्ति । ....















सुकन्या जयानन्दस्य आर्यस्य च अनुज्ञां प्राप्नोति गमनाय ।




जयानन्दः आर्यः च आश्रमं प्रत्यागच्छतः ।




वसन्तः दलपतिना सुखदेवेन मिलति ।






वसन्तः मानवेन्द्रं दृष्ट्वा प्रवृत्तं सर्वं विस्तरेण श्रावयति ।




दलपतिः सुखदेवः राजभवनं प्रति प्रस्थितः ।




सुखदेवः तदीयाः अङ्गरक्षकाः च राजभवनं प्रति प्रतिष्ठते ।




दलपतेः अङ्गरक्षकाः राजभवनं परितः तिष्ठन्ति ।



दलपतेः अङ्गरक्षकाः स्वीये स्वीये स्थाने तिष्ठन्ति ।



सुखदेवः राजभवनं प्रविशति ।

राजभवनस्य तु अपायः नास्ति कस्माच्चिदपि ।



राजभवनस्य परम्परायाः अनुगुणं प्रधानरक्षकः दलपतिं स्वागतीकरोति ।

महोदय ! गतरात्रौ राजा सेनापतिना सह इतः गतः । सः इतोऽपि न प्रत्यागतः ।

सः न जीवति इदानीम् । नूतनः राजा आगमिष्यति ।

नूतनः राजा ? कः सः ?







सः अस्ति राज्ञः शान्तिदेवस्य औरसपुत्रः राजकुमारः आर्यः एव । तस्य स्वागताय सर्वविधा अपि व्यवस्था भवतु ।

दलपतिः सुखदेवः आस्थानं प्रविश्य राज्याभिषेकस्य व्यवस्थां स्वयं परिशीलयति ।

अनुवर्तते

# निमन्त्रयामः वयं किशोरान् कृतिकारान् !

(ऊनषोडशवर्षीयान्)

**भवद्भिः कथाः विनोदप्रसङ्गाः च प्रेषयितुं शक्याः**
**साहित्योत्सवाय आगामिनः एप्रिल् - २००६ तः आरभ्यमाणाय ।**
**स्वीयया मातृभाषया लिखिताः सर्जनात्मिकाः**
**कृतयः एव अर्हत्वेन परिगण्यन्ते ।**

**मार्गसूच्यः -**

**कथाः -** ग्रामपरिसरे श्रूयमाणः, पुराणेभ्यः उद्धृताः, जानपदकथाः, ऐतिहासिक्यः कथाः इत्यादयः **अर्हत्वेन परिगणिताः न भवन्ति** । कथा २५० शब्दैः निर्मिता स्यात्, न तु दीर्घा ।

**विनोदप्रसङ्गाः -** विनोदपूर्णाः प्रसङ्गाः सम्भाषणानि च स्वीकारार्हाणि । त्र्यधिकाः प्रसङ्गाः एकेन न प्रेषणीयाः ।

- प्रेष्यमाणाः कथादयः सर्जनात्मिकाः इति पालकैः प्रमाणीकृताः स्युः ।
- प्रकाशनाय अनुमताः कथादयः सम्पादनपरिष्कारम् अर्हन्ति यथावसरम् ।
- सम्पूर्णः सङ्केतः प्रेषणीयः । पिहितपत्रस्य उपरि 'Literary Fare' इति लेखनीयम् ।
- प्रकाशनाय चिता कथा रू. १००/ - गौरवधनम् अर्हति । विनोदप्रसङ्गश्च अर्हति ५०/ -.
- एतद्विषये कोऽपि पत्रव्यवहारः नानुमंस्यते । तिरस्कृताः कथादीः अपेक्षमाणैः स्वसङ्केतसहितं मूल्याङ्कयुक्तं च पिहितपत्रं प्रेषणीयम् । अन्यथा कथादयः न प्रतिप्रेषयिष्यन्ते ।
- एप्रिल् - २००६ मासाय कथादीः प्रेषयितुम् अन्तिमः दिनाङ्कः - ३१, जनवरी - २००६ । एवमेव अग्रिममासानां विषये अपि चिन्तनीयम् ।

**लेखः अधस्तनसङ्केताय प्रेष्यताम् -**

**Editor, Chandamama, CHANDAMAMA INDIA LIMITED**
82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097

# पुटोऽयं भवताम् पुटोऽयं भवताम्

## भवदर्थकं विज्ञानम्

### अन्तरिक्षनौकायाः अवस्थितिः

अन्तरिक्षं प्रति प्रेषिताः अन्तरिक्षनौकाः सम्पर्कक्षेत्रे महत्त्वपूर्णं स्थानं वहन्ति । जलमूलस्य अन्वेषणे अन्तरिक्षक्षेत्रीये संशोधने चापि नितराम् उपकुर्वन्ति । गुरुत्वाकर्षणशक्तेः प्रभावम् अप्राप्य ताः कथम् अन्तरिक्षे तिष्ठन्ति इति तु कुतूहलकरः अंशः ।

अत्रत्यं तत्त्वं नातिकठिनम् । भ्रमरिकां स्वीकृत्य यदा वयं भ्रामयामः तदा सा परिभ्रमणम् आरभते । परस्परविरुद्धशक्तिद्वयस्य कारणतः सा परिभ्रमति । भवद्धस्तप्रेरिता शक्तिः तां भ्रामयति । भूमिस्था आकर्षणशक्तिः ताम् आकर्षति अपि । उभयोः शक्त्योः समता यावत् भवति तावत् सा भ्रमन्ती एव भवति । किन्तु यदा प्रेरिका शक्तिः क्षीणा भवति तदा सा पतति ।

प्रायः एषा एव प्रक्रिया दृश्यते अन्तरिक्षनौका - विषये अपि । भूमिगता गुरुत्वाकर्षणशक्तिः नौकया सृष्टा परिभ्रमणशक्तिः च ताम् अन्तरिक्षे स्थापयति । यदा गुरुत्वाकर्षणशक्तेः प्राबल्यं भवति, तदा अन्तरिक्षनौका भूमिं प्रति आगच्छन्ती वायुना उद्घृष्टा सती पतिष्यति ।

## भवतां परिसरः

### कमलदलानां वैशिष्ट्यम्



अस्माकं राष्ट्रियं पुष्पं बहूनि वैशिष्ट्यानि वहति । यद्यपि एतत् पुष्पं पङ्के जायते, किन्तु एतस्य नैर्मल्यं तु असाधारणी । कमलदलानि स्वस्य नैर्मल्यस्य रक्षणे समर्थाः सन्ति । यतः एतेषां रचना तथा कृता अस्ति भगवता । सूक्ष्मदर्शकस्य साहाय्येन दर्शनात् ज्ञायते यत् दलानां तले गोलाकारकाः कोषाः भवन्ति इति । अतः एव दलस्य ऊर्ध्वतलं रूक्षवत् भवति । अतः तदुपरि पतितं मालिन्यं निर्यासदृशस्य आवरणस्य उपरि एव तिष्ठति । तस्मात् मालिन्यस्य कमलदलस्य च सम्पर्कः दृढः न भवति । अतः कमलदलस्य उपरि स्थिताः अपि मालिन्यांशाः जलसम्पर्कः यदा प्राप्यते तदा तत्र स्थातुं न अर्हन्ति । जलेन क्षालिताः सन्तः अपगच्छन्ति ते । एषा प्रक्रिया एव 'कमलदलप्रक्रिया' इति निर्दिश्यते ।

# पुरोऽयं भवताम् पुरोऽयं भवताम्

## भवन्तः जानन्ति किम् ?



### 'बुक्प्लेट्'शब्दः श्रुतः किम् ?

भवन्तः 'डिन्नर्प्लेट्' (भोजनस्थालिका) इति शब्दं श्रुतवन्तः स्युः । 'फिश्प्लेट्' इत्यपि श्रुतम् एव स्यात् । किन्तु 'बुक्प्लेट्' इति शब्दः किं श्रुतः ? तस्य पुस्तकस्य च न कोऽपि सम्बन्धः । एषु दिनेषु युतकादिषु अभिज्ञापकं वस्त्रखण्डं यत् दृश्यते तस्यैव पूर्वतनं रूपं तत् ।

१५ शतके जर्मनीदेशे ऐदम्प्राथम्येन 'बुक्प्लेट्' निर्मितम् । तदा अपि तत् कागदनिर्मितं न आसीत्, प्रत्युत काष्ठनिर्मितम् । तदुपरि किमपि लिखितम् अपि न भवति स्म । वर्णेन लिप्यते स्म भेदज्ञापनाय । प्रथमं मुद्रितम् अभिज्ञानफलकम् अल्ब्रेक्ट्ड्युरेर्नामकेन निर्मितं षोडशशतकस्य पूर्वार्धे । प्राचीनानां तादृशानाम् अभिज्ञापकफलकानां सङ्ग्रहे बहवः आसक्तिं वहन्तः दृश्यन्ते अद्य ।

## अभिवर्ध्यतां ज्ञानशक्तिः

१९५० तमे वर्षे भारतं गणतन्त्रप्रधानं राष्ट्रं जातम् । तं कालं, तदनन्तरीयाः घटनाः च आधारीकृत्य अधः केचन प्रश्नाः दत्ताः सन्ति । तेषाम् उत्तरदानेन आत्मनो ज्ञानं परीक्ष्यताम् ।

१. राज्यसभायाः अध्यक्ष-स्थानं कः निर्वहति ?

अ) प्रधानमन्त्री

आ) भारतस्य राष्ट्रपतिः

इ) अटार्नी जनरल्

ई) लोकसभाव्यवहारसचिवः ।





२. लोकसभायाः प्रथमा घण्टा कथं याप्यते ?

अ) चर्चया । आ) सदस्यैः पूर्वम् एव सूचितानां प्रश्नानाम् उत्तर-दानेन । इ) विधेयकविषये चर्चया ।

ई) अनिवार्यतया त्वरया चर्चनीयानां विषये चर्चया ।

३. देशे कति उच्चन्यायालयाः सन्ति ?

अ) १८ आ) २८

इ) २२ ई) ३२



४. लोकसभासदस्यानां सङ्ख्या का ?

अ) ३५० आ) ४५०

इ) ५४५ ई) ५५२

(उत्तराणि ७० तमे पृष्ठे)

# चित्रशीर्षिकास्पर्धा



**अधस्तनं चित्रद्वयं दृष्ट्वा परस्परसम्बन्धिना वाक्यद्वयेन**
**चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ?**



*TATA NARAYANAMURTHY*



*TATA NARAYANAMURTHY*

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -
**चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५**
योग्या शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू.१००/- पुरस्काररूपेण दास्यते ।
पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## अभिनन्दनानि

'नवम्बर्'मासस्य शीर्षिकाप्रेषकः -
**कलभाग तारानाथः**
४/२०१, चेरीष होम्स्
स्वामी विवेकानन्दनगर,
**विरार् (प) - ६०० ०२०**

## पुरस्कृता शीर्षिका





**नमति कुञ्जरं बाला**
**नमयति हयं ससहाया**



## अभिवर्ध्यतां ज्ञानशक्तिः - उत्तराणि

१. आ) भारतस्य राष्ट्रपतिः
२. आ) पूर्वमेव सदस्यैः सूचितानां प्रश्नानाम् उत्तरदानेन ।
समयोऽयं 'प्रश्नकालः' इति निर्दिश्यते ।
३. अ) १८ ४. इ) ५४५

Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 26 on behalf of Chandamama India Limited, No. 82, Defence Officers Colony, Ekkaluthangal, Chennai - 600 097. Editor : B. Viswanatha Reddi (Viswam)

# अविस्मरणीयं भारतम्




भुवनेश्वरोत्सवः
६-१५, जनवरी - ०६

## सन्तुष्यताम्

### आरात्रि प्रचलतः भगवतः शिवस्य नृत्यानि दृष्ट्वा

# अनुभूयताम् एकाम्रोत्सवस्य आनन्दः

**६ - १५ जनवरी - २००६**

आगम्यताम् आस्वाद्यतां च आनन्दः, यत्र च लिङ्गराजनामा शिवः मुक्तेश्वरमन्दिरे विविधैः नृत्यप्रकारैः प्रत्यक्षः भवति । प्राचीनकालीनानि करकौशलवस्तूनि, तीव्रेच्छाजनिकाः पाकपद्धतयः, एकाम्रकाननीयानाम् अपूर्वाणां पुष्पाणां सुगन्धः । भगवतः नृत्यस्य दर्शनाय आगम्यतां विशिष्टातिथिरूपेण ।

# ORISSA

सुन्दरम् • शान्तम् • उत्कृष्टम्

mudra 1726







### अन्ये अपि केचन उत्सवाः

१२-१५ जनवरी, २००६ - मुक्तेश्वरनाट्यसङ्गीतोत्सवः, मुक्तेश्वरमन्दिरे
१-१५ जनवरी, २००६ - राष्ट्रियकरकौशलप्रदर्शनम्, प्रदर्शनाङ्गणे
६-११ जनवरी, २००६ - जानपदनृत्योत्सवः - एकाम्रकुट्याम्
७-८ जनवरी, २००६ - पुष्पप्रदर्शिनी - एकाम्रकानने
६-१५ जनवरी, २००६ - अन्ताराष्ट्रियः खाद्योत्सवः - प्रदर्शनाङ्गणे




For more information contact: Director, Tourism, Paryatan Bhavan, Bhubaneswar-751014, Orissa, India.
Tel: (0674) 2432177, Fax: (0674) 2430887, e-mail: ortour@orissatourism.gov.in, website: www.orissatourism.gov.in

CHANDAMAMA (Sanskrit) JANUARY 2006
Regd. with Registrar of Newspaper for India No. 42864/85
Regd. No. TN/CC(S)Dn/158/06-08
Licenced to post WPP - Inland No. TN/CC(S)Dn/82/06-08, Foreign No. 83/06-08




# WISH YOU A MAHA HAPPY NEW YEAR!

## MAHALACTO WORD POWER CONTEST

Make as many meaningful words as you can by using the letters from the following sentence given within brackets.

**(Maha Rich Maha Fun Maha Yummy Nutrine MAHALACTO)**

### Steps to be followed to win the prizes

1. Make as many meaningful words as you can by using the letters from the above sentence given within brackets.
2. Write down all the words in a piece of paper (list of words).
3. Fill the details in the enclosed coupon.
4. Collect 10 empty MAHALACTO wrappers.
5. Attach all of them together (list of words + coupon + 10 empty MAHALACTO wrappers)
6. Send all of them to the following address:

**Post Box No. 1056,**
**Kilpauk, Chennai - 600 010.**

**Closing Date :**
**March 10, 2006.**



First Prize - 25 Nos.
Konica Camera



Second Prize - 200 Nos
Wrist-watches



Third Prize - 750 Nos.
5-in-1 Games Set

**COUPON**

Name : ..............................................................

Age : ...... Date of birth : .................. Class : ........ School : ..............................

..............................................................

Home address : ..............................................................

.............................................................. PIN Code : ..................

No. of words.......... (list attached)

Signature of Participant




Terms and conditions : • The Contest is open to Indian children below 15 years. They should not be related to any employee of Chandamama India Ltd. or Nutrine Confectionery. • A participant may send any number of entries. • Each entry has to be accompanied by 10 wrappers of MAHALACTO and the coupon above duly filled up. • Entries without wrappers and coupon will not be considered. • Whoever sends the most number of words will be qualified for one of the prizes. • In case of identical number of maximum meaningful words, winners will be chosen by lucky draw. • The first lucky draw will be held in the month of February and the final draw will take place in the month of March. • Closing Date : March 10, 2006. • Send the entries, coupon and MAHA LACTO wrappers in an envelope superscribed MAHALACTO WORD POWER Contest to Post Box No. 1056, Kilpauk, Chennai - 600 010. • Nutrine Confectionery Company Private Limited will not be responsible for any consignment if it is lost in transit. • Guarantee on prize articles lies entirely with the manufacturer and not with Nutrine Confectionery Private Limited. All entries and contest material will become the property of Nutrine Confectionery. • Cash in lieu of prizes will not be given. • Winners should fill in a claim form while collecting the prizes at the respective dealer / distributor point. • All decisions regarding the offer are solely at the discretion of Nutrine Confectionery. No communication with regard to the contest will be entertained. • All disputes shall be subject to Chittoor, A.P. jurisdiction only. • Nutrine Mahalacto is also available without this offer.